KÂVYAMÂLÂ. ७१.



THE

# KATHÁKAUTUKA

OF

S'RÍVARA.

EDITED BY

MAHÁMAHOPÁDYÁYA PAṆḌIT S'IVADATTA

*Head Paṇḍit and Superintendent, Sanskṛit Department, Oriental College, Lahore,*

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÁRÁM JÁVAJI

Proprietor of Jávaji Dádáji's 'Nirnaya-ságara' Press

BOMBAY.

काव्यमाला. ७२.

पण्डितश्रीवरविरचितं

# कथाकौतुकम् ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०१



मूल्यं रूप्यकपादत्रयम् ।

# श्रीवरपण्डितः ।



मुल्ला जामी नूरुद्दीन-अब्दुर् रहमानविरचितयूसुफ-जुलेखानुवादात्मकस्य कथाकौतुकग्रन्थस्य कर्ता श्रीवरकविः कदा क भूमिमण्डलं मण्डयाचकारेति जिज्ञासायामनेकग्रन्थपर्यालोचने प्रवृत्ते—

'प्राज्ये जाग्रति राज्येऽस्य पृथिव्याः पृथिवीपते ।
शाके मुनिद्विवेदेन्दु(१४२७)गणिते विक्रमोष्णगो. ॥ ३७ ॥
स्थितेऽपि लौकिके वर्षे चन्द्राष्ट(८१)परिपूरिते ।
माधवे मासि राकाया रवौ मेषमुपागते ॥ ३८ ॥'

इति कथाकौतुकप्रथमकौतुकायपद्यदर्शनात १४२७ मितेऽब्दे ८१ अङ्कयोजनेन १५०८ (A. D 1451) वैक्रमे शरदि वैशाखमासि पूर्णिमायामस्य ग्रन्थस्य निर्माणसमयोल्लेखोपलम्भात्कविवरस्याप्ययमेव सत्तासमय । अनेनैव कविवरेण पण्डितजोनराजादनन्तरं A D. 1477 समये तृतीया जैनराजतरङ्गिणी निर्मितासीत् ।

'तस्मिन्मया पण्डितजोनकाख्य नत्वा गुरु पण्डितश्रीवरेण ।
भूपालतुष्टयै सुरलोकवाण्यारम्भोऽध्वनाकारि मनोहरोऽयम् ॥ ४० ॥'

इति कथाकौतुकप्रथमकौतुकीयश्लोकेन ,

'श्रीजोनराजविबुध कुर्वन्राजतरङ्गिणीम् ।
सायकाग्नि(३५)मिते वर्षे शिवसायुज्यमासदत् ॥ ६ ॥
शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डित ।
राजावलीग्रन्थशेषापूरणं कर्तुमुद्यत ॥ ७ ॥'

इति जैनराजतरङ्गिणीप्रथमतरङ्गीयपद्यदर्शनेन च श्रीवरसत्तायामेव जोनराजस्वर्गमनलेखोपलम्भाद्य जोनराजदेशकालावेव श्रीवरदेशकालौ । जोनराजश्च जैनोल्लाभदीनराज्य(A D 1417-1467)समये कश्मीरमण्डलं मण्डयामासेत्यादि जोनराज श्रीवरविरचितराजतरङ्गिणीभ्यां निश्चितम् । एतेनास्य कविवरस्य त्रिसप्तपञ्चदशशताब्दयुत्तरार्धं सत्तासमय प्रतीयते, इति केचित् ।

परे तु—विमेतस्य ग्रन्थकर्तुर्नाम श्रीवरः श्रीधरो वेति चतुर्दश-पञ्चदशकौतुकसमाप्तिलेखदर्शनात संदिग्ध वर्तते । तत्र च लेखे लेखकप्रमादानवधानतया श्रीवरस्थाने श्रीधरनाम स्थापितमुत चान्यत्र श्रीधरस्थाने श्रीवरनाम वा स्थापितमिति, अस्य हि श्रीवरस्य श्रीधरस्य वा गुरु पण्डितजोनको राजतरङ्गिणीकृतो जोनराजाद्भिन्नोऽभिन्नो वेति च न निश्चेतुं शक्यते ।

१ अस्यैव ग्रन्थस्य इङ्ग्लिशभाषायामनुवादस्तु Ralph T. H. Griffith महाशयवरैर्लैण्डननगरे A. D. 1882 वत्सरे मुद्रयित्वा प्रकाशित

यदि चाय पण्डितजोनको राजतरङ्गिणीकर्तुर्जोनराजादभिन्न स्यात्, तर्हि 'शिष्योऽस्य जोनराजस्य–' 'श्रीजोनराजविबुध –' इति जैनराजतरङ्गिणीप द्यवत् 'तस्मिन्मया पण्डितजोनकाख्य' अत्रापि ग्रन्थकर्त्रा 'पण्डितजोनराज' इति स्वगुरो स्फुट नाम पठितव्यमासात्, तच्छन्दोभङ्गाद्यदोषाभावेऽपि विद्यमाने न पठितम्, अतो राजतरङ्गिणीकर्तुर्जोनराजाद्भिन्न एवाय कश्चन जोनककवि ।

किं च पण्डितजोनकान्तेवासी पण्डितश्रीवर श्रीधरो वा पञ्चविंशत्युत्तरप ञ्चदशशतात(१५०८)ब्दयामिम ग्रन्थ रचयाञ्चकारेत्युच्यते चेत्, तर्हि 'शाके मुनिद्विवे देन्दुगणिते–' एव श्लोक दर्शयता ग्रन्थकर्त्रा 'शाके वसुखबाणेन्दुगणिते' इत्थ पद्य रचयितु नाशाकि किम्, येनेत्थमविरच्य मुनिद्विवेदेन्दौ १४२७ रूपात्मके क्रिष्टक ल्पनया चन्द्राष्ट(८१)संख्यया सकलय्य १५०८ सवत्सररूप ग्रन्थनिर्माणसमयाधारभूत दर्शितम् ।

किंच जैनराजतरङ्गिणीकर्तुः श्रीवरपण्डितस्य, कथाकौतुकग्रन्थकर्तुः पण्डित श्रीवरस्य श्रीधरस्य वा ग्रन्थरचनाया महान् रचनाभेदोऽप्युपलभ्यते । अतो जैनरा जतरङ्गिणीकर्तुः श्रीवरपण्डितादपरोऽय पण्डितश्रीवर श्रीधरो वा कवि १४२७ (A D 1370) वैक्रमशरादि, 'चन्द्राष्ट(८१)परिपूरिते' इति च, 'सायकाग्नि(३५)मिते वर्ष' इति जैनराजतरङ्गिणीपद्यवत् एकाशीतिपरिपूर्णता गते कस्यचिद्रामण्डलभर्तु शकाब्दे एन ग्रन्थ रचयन् क भूमिमण्डल मण्डयामासेति च न वक्तु शक्यते । एव चा स्यकथाकौतुककर्तु पण्डितश्रीवरात् मुल्ला जामी नूरद्दीन-अब्दुर-रहमानय वनपण्डित प्राक्कालीन इति च सिद्ध्यति । एतेन मुल्ला-जामी नूरुद्दीन अब्दुर रह मानयवनपण्डितसमयसूचको Ralph T H Griffith महाशयवरलेखोऽय पण्डि तवरैश्चिन्तनीय — 'Nuruddin Abdur Rahman was born in the year 1414 A D , at Jam, a little town in Khurâsân, from which he took the poetic name, Jami, by which he is generally known At the age of five he received the name of Nuruddin, or, Light of the Faith, and in later life his learning fame, and sanctity gained for him the title of Moulâna, or, our Master He studied at Herât and Samarkand, where he not only outstripped the ablest and most diligent of his fellow students, but puzzled the most learned of his teachers The fame of his learning soon spread to the most distant provinces of Persia, and into other Asiatic countries Sultan Abusaid, Timur's uncle, invited him to his court at Herât and all the princes,

nobles, and learned men of the time sought the company of the distinguished poet. In 1472 A. D. Jāmi performed the pilgrimage to Mecca, and, after some stay at Baghdad returned in the following year to Herāt, where he died in 1492."

अस्य च कविवरस्य नैव यवनशास्त्रपारंगमत्वं प्रतीयते, नापि मुल्ला-जामी-नूरुद्दीन-अब्दुर-रहमानविरचितयूसुफ-जुलेखाख्ययवनग्रन्थस्य क्रमशो निर्जरभाषयाऽनुवाद उपलभ्यते, बहूना मुल्ला-जामी-नूरुद्दीन-अब्दुर-रहमाननिर्मितयूसुफ-जुलेखान्तर्गतपदार्थानामवर्णनादन्ते कथायास्त्यागाच्च ।

अस्य हि ग्रन्थस्यैकमेव पुस्तकमस्माभिः स्वर्यातमहामहोपाध्यायपण्डितदुर्गाप्रसादशर्मणां सरस्वतीसदनत उपलब्धम् । तच्च कश्मीरलिपिलिखित जीर्णपण्णवति(९६)पत्रात्मकं वर्तते । तस्यैकस्याधारेण शोधितमुद्रितेऽस्मिन्ग्रन्थे यत्रकुत्रचनाशुद्धिः स्थिता जाता वा भवेत्, तत्र सहृदयहृदयाः संशोधयन्तु । यतः—

गच्छतः स्खलनं चापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयत.—

पण्डितशिवदत्त काशीनाथौ ।

# काव्यमाला ।

## पण्डितश्रीवरविरचितं

## कथाकौतुकम् ।

### प्रथमं कौतुकम् ।

सानन्दं हृदये विलोक्य विपदं यच्छुष्कशष्पोपमं
मन्यन्ते भुवनाधिपत्यमखिलं योगेन योगेश्वराः ।
ध्यात्वाप्येकनिमेषमात्रमपि यत्सौख्यं सदा प्राप्यते
वन्दे सिद्धसुरेन्द्रवन्दितमदस्तेजः परं शांभवम् ॥ १ ॥

प्रणम्य विघ्नौघहरं गणेशं त्रिधास्वरूपामपि भारतीं ताम् ।
विरच्यते यावनशास्त्रबद्धकथा मया निर्जरभापयेयम् ॥ २ ॥

क्रमेण येन भेदा(?)र्थो मेलाज्यामेन वर्णितः ।
तेनैव हि मया सोऽयं श्लोकेनाद्य निरूप्यते ॥ ३ ॥

प्रबोधयाशाकलिकां प्रसादमधुरप्रभो ।
तदुत्पन्ने प्रीतफलं दातुमर्हसि मे शुभम् ॥ ४ ॥

शोभितं कुरुते नैव मानसोद्यानमद्य मे ।
तत्सौगन्धेन शुद्धेन शरीरं परिपूरय ॥ ५ ॥

असारे खलु संसारे चिन्ताशतसमाकुले ।
अज्ञानत्व(?)स्य देवेश प्रकाशं मे निदर्शय ॥ ६ ॥

मनो मेऽस्तु सदा शंभो भवेत्सेवापरस्परम् ।
वक्तुं गुणगणं नित्यं रसनेयं प्रवर्तताम् ॥ ७ ॥

---

१. एतन्नामकमनुष्येण. २. 'भवत्सेवापरायणम्' इति भवेत्.

मेधाभ(?)भद्रिकायास्तु शुभवाग्योगमद्भुतम्।
मह्यं देहि भवेद्येन कार्यसिद्धिः सुखावहा ॥ ८ ॥
तुलयन्वाक्यरत्नानि(?) हृत्कोशान्मम भारतीम्।
भवद्भक्तितुला देहे सुकर्णार्थान्विता भवेत्(?) ॥ ९ ॥
स्थैर्यं हि जगतेनेव[1] नश्यते वचनं विना।
शंभुभक्तियुतं तच्चेच्छोभते साधुपूजितम् ॥ १० ॥
पुण्यं शास्त्रामृतं पीत्वा यातास्ते हि कवीश्वराः।
निधाय विपुलां कीर्तिं सुस्थिरां भुवनत्रये ॥ ११ ॥
नावशिष्टः कविः कश्चित्तेषां योऽद्यतेनाद्भवेत्[2]।
क्षमः शिक्षयितुं स्वल्पकाव्यशक्तियुतान्स्वयम् ॥ १२ ॥
तस्मादेद्यधुना कालगतिं वीक्ष्य शुभाशुभम्।
कार्यं यदस्ति ते शक्तिर्विधातुं कुरु सत्वरम् ॥ १३ ॥
किं तु पूर्वमपूर्वं[3] यत्परं योगनिरूपणम्।
कृतं मनीषया तेन तदन्ते कथ्यते मया ॥ १४ ॥
सर्वत्रायं क्रमः पूर्वं शृङ्गाररससंयुताम्।
अभिधाय कथां पूर्वैः[4] शान्तोऽन्ते परिकीर्तितः ॥ १५ ॥
योऽयं महामदो नाम पैगंबरशिरोमणिः।
कृतालापो खदैवेन सह शुद्धाशयोऽपि सन् ॥ १६ ॥
तदंज्ञयोवसंबद्धधर्मसेतुर्महाबलः[5]।
तत्प्रभावानभिज्ञात्वा तथा शास्त्रविपर्ययात् ॥ १७ ॥
माहात्म्यं वक्तुमेवास्य विचारनिरतः परम्।
न समर्थोऽस्म्यहं तत्र संशयाकुलिताशयः ॥ १८ ॥
तस्मात्संशयितं किंचिद्दोपायैवोपकल्प्यते।
माहात्म्यं किं तु तन्नाम्नो वक्ष्यतेऽद्य महीपतेः ॥ १९ ॥

१. 'जगतो नैव' इति भवेत्. २. 'नान्' इति स्यात्. ३. 'र्वां' इति स्यात्. ४. 'पः स्वदेवे' इति स्यात्. ५. 'दाज्ञयावसंब-' इति स्यात्.

जीयान्महामदः शाहिर्धर्मप्रवरगर्वितः ।
श्रीमान्काश्मीरभूपालः फुल्लराजीवलोचनः ॥ २० ॥
यदेतन्निर्मितं धात्रा जगत्स्थावरजङ्गमम् ।
भवाविधानं नानार्थं नरदेववदद्भुतम् ॥ २१ ॥
तन्महामदभूपेन सर्वभूपालमौलिना ।
अधुना शोभितं संपन्नयनेन वपुर्यथा ॥ २२ ॥
को हि वक्तुं नृपस्यास्य महिमानं कवीश्वरः ।
शक्तो यस्य यशः शुभ्रं पूरयित्वा महीमिमाम् ॥ २३ ॥
बलेनैव नभोनीध्रं छित्वा रूढं दिवं वियत् ।
सरन्ध्रं सर्वतो जातं तेन ताराभ्रमो वृथा ॥२४॥(युगलकम्)
सदा धर्मधृतोपाया हतापायाः सुकर्मभिः ।
देवप्रायाः प्रजाः प्रायो यस्मिन्शासति मेदिनीम् ॥ २५ ॥
अवाचीं दिशमाश्रित्य दिनेशोऽपि हतप्रभः ।
जाता यस्य विजित्वा तां तेजोवृद्धिर्न तत्क्षयः ॥ २६ ॥
दृश्यते वैरिनिकरैर्भीमार्जुनसमो रणे ।
योऽयमर्थिगणो दाने कर्णाधिकगुणः सदा ॥ २७ ॥
तथैव ललनाभिर्यः कंदर्पो मन्यतेतराम् ।
मन्त्रिभिर्मन्त्रकरणे गुरुकाव्योत्तमोऽनिशम् ॥ २८ ॥
तेजसोऽर्धं स्वकं दत्त्वा यस्मै प्रीत्या हरिः स्वयम् ।
यतस्तेनास्तमेवासौ पूर्णधामा दिवानिशम् ॥ २९ ॥
प्रीत्यै तु गोसहस्रस्य येन धर्मपुरेण च ।
ज्ञात्वा पूर्वपदार्थैक्यं यथाद्गावो विमोचिताः ॥ ३० ॥
योऽयमिन्द्राधिकः सर्वगुणो नाम्ना शचीपतिः ।
शतमन्युरिव स्यातः शान्तक्रोधो महेश्वरः ॥ ३१ ॥
जित्वा शत्रून्रणे त्यक्तवैरस्त्वत्पुररक्षकः ।
योऽयं पुरंदरो यद्वक्रोधो देशविदारणात् ॥ ३२ ॥

दग्ध्वा वैरिकुलाटवीं सुविततां व्योमेति रूढिं दृढां
शून्ये शब्दगुणे स्वयं वितनुते तद्धूमसङ्गेन याः ।
भानुर्भाति च विस्फुलिङ्ग इव तन्मध्येऽपि यस्याध्वनि
शेकुस्ते कविशेखराः कवयितुं के वा प्रतापानलम् ॥ ३३ ॥

हस्ताम्भोजालिमालेव नखाब्जहरिणच्छविः ।
दानकुञ्जरगण्डोत्थमदधारेव निर्गता ॥ ३४ ॥
पराक्रमह्रदोत्पन्नबालशैवालवल्लरी ।
ज्वलत्प्रतापहुतभुग्धूमरेखानुकारिणी ॥ ३५ ॥
राजते वैरिललनावेणिबन्धाकृतिः करे ।
यथैवासि.................................. ॥ ३६ ॥(कुलकम्)

प्राज्ये जाग्रति राज्येऽस्य पृथिव्यां पृथिवीपतेः ।
शाके मुनिद्विवेदेन्दुगणिते विक्रमोस्म गोः(?) ॥ ३७ ॥
स्थितेऽपि लौकिके वर्षे चन्द्राष्टपरिपूरिते ।
माधवे मासि राकायां रवौ मेषमुपागते ॥ ३८ ॥
मलाज्यामेन येसोहजोलेखा[1] नाम विश्रुतः ।
रचितोऽप्यद्भुतः पूर्वं ग्रन्थो देवमुखोद्गतः ॥ ३९ ॥
तस्मिन्मया पण्डितजोनकाख्यं नत्वा गुरुं पण्डितश्रीवरेण ।
भूपालतुष्टौ सुरलोकवाण्यारम्भोऽध्वनाकारि मनोहरोऽयम् ॥ ४० ॥
(कुलकम्)

विद्वन्मानससच्छास्त्रकुमुदानन्दकारकः ।
लीलज्ञानघनध्वान्तध्वान्तस्वान्तप्रकाशकृत् ॥ ४१ ॥
सत्यसंधो जितक्रोधो द्विजमण्डलनायकः ।
ब्रह्मण्येऽथ सदाचारः सदा भूपालपूजितः ॥ ४२ ॥
शान्तोऽनन्तगुणः सर्वश्रुतिस्मृत्यर्थपारगः ।
संध्यास्नानरतः शिष्यचकोरगणसंमतः ॥ ४३ ॥

---

1. एतन्नामकः कश्चन ग्रन्थो भवेत्.

गुरोरिव सभामध्ये दृष्टो गुरुगणान्वितः ।
गुरुर्ज्योत्स्नाकराख्यो मे सततं वाक्सुधाकरः ।
आसीद्भुवि भवे भक्तो विभवी यः समन्वितः ॥ ४४ ॥

(पञ्चभिः कुलकम्)

जयन्तु सततं सन्तः संतोपविपदाशयाः ।
परोपकारकरणे सदा बद्धधियोऽपि ये ॥ ४५ ॥
शुभं परगुणं ज्ञात्वा स्वयं साध्विति वादिनः ।
न्यूने चोपस्कृतिपराः क्वचिन्नोपहसन्ति च ॥ ४६ ॥

(युगलकम्)

तस्मान्न सज्जनभयं कवीनां जातु जायते ।
सदस्सारमेयानां···· न किं भविष्यति ॥ ४७ ॥
इति ज्ञात्वा रसमयं कथाकौतुकसंज्ञितम् ।
श्रीवराख्यो बुधो नूनं प्रबन्धं साधयाम्यहम् ॥ ४८ ॥
नास्ति लोकेऽपरं किंचिच्चतुरागं विना परम् ।
तत एव हि वैराग्यं जायते सुखदं पुनः ॥ ४९ ॥
चित्तासक्तिवशेनैव स स्वयं भगवाञ्छिवः ।
शक्त्यैव सह सङ्गस्य सर्वमेतदवासृजत् ॥ ५० ॥
द्वित्वहीनेऽप्यनिर्देश्ये जगन्नामविवर्जिते ।
कैवल्ये केवलं तस्मिन्नासीदेको महेश्वरः ॥ ५१ ॥
नानारूपमयं दिव्यं सर्वलावण्यसंयुतम् ।
अनेककौतुकाकीर्णमनवद्यमनश्वरम् ॥ ५२ ॥
पश्यन्नेवात्मनात्मानं सुधामादर्शमण्डले ।
समयेऽस्मिन्स देवेशो बभूवानन्दनिर्भरः ॥ ५३ ॥
कस्मैचिद्दर्शयाम्येतद्यावच्चिन्तान्वितः शिवः ।
तावदिच्छा समुत्पन्ना प्रादुर्भूतास्य मोहिनी ॥ ५४ ॥

---

१. 'चातुरागं' इति स्यात्.

रूपस्यापह्नवं कर्तुं न शक्तो रूपवान्सखम् ।
तमोहरे निरुद्धे तु द्वारि सद्दर्शयिष्यति ॥ ५५ ॥
स्थलारविन्दं पश्यैकं गुप्तं भूमौ समस्तकम् ।
समाकर्षति सौन्दर्यगुणेनैव कथं मदौ(?) ॥ ५६ ॥
इच्छाशक्त्याथ संगम्य रागेणाप्याश्रिताश्रयः ।
स हि देवो महादेवस्तन्मयं व्यसृजज्जगत् ॥ ५७ ॥
विधाय विविधां सृष्टिं स्वकीयांशयुतां ततः ।
कुर्वन्रागमयीं लीलां विभात्यस्यां स्वयं विभुः ॥ ५८ ॥
तेनेच्छया जगत्सर्वं रचितं यच्चराचरम् ।
रागेणापि न तज्जातु विरागं जायते क्वचित् ॥ ५९ ॥
रागेणैव सदा देवी त्रयं सृष्टात्ममायया ।
त्रीनेव पुरुषांल्लोके हेतुभूतः स्वदेहतः ॥ ६० ॥
तदारमत तैः सार्धं यथेष्टं बहुवत्सरान् ।
ततो मे तदनुज्ञाताः पुरःसरमिवासृजन् ॥ ६१ ॥
तस्माद्रागमयं सर्वं चेतनाचेतनं जगत् ।
प्रतिभात्येव यत्नेन रहितं तन्न गण्यते ॥ ६२ ॥
दृष्ट्वैवाचेतनं बद्धरागं धर्मरुचाम्बुजम् ।
सुधांशुना च कुमुदं तत्सिक्ताः किं न मानवाः ॥ ६३ ॥
चित्तासक्तिरतिं वक्तुं न हि शक्तो नरः पराम् ।
तत्सहस्रं न चेदेकजिह्वयैव समन्वितः ॥ ६४ ॥
तदेव हि शुभं तस्माद्यत्किंचिद्रसनिर्णयम् ।
करोत्यन्यहतः सर्वं नीरसं कथितं बुधैः ॥ ६५ ॥
यदि चित्तं भवेद्राश(?) वृथा हीनं न तन्मनः ।
तत्र संपीडया व्यक्ता न सा मृद्वारिणा विना ॥ ६६ ॥
विवृत्य वदनं लोकात्तत्रार्पय मुखं मुदा ।
संयोजनाधिकः प्रोक्तो रागो हर्षाय रागिणाम् ॥ ६७ ॥

तच्चिन्ता हृदि सर्वेषां न्यूना मा भूत्कदाचन ।
मनो मनस्विनां तेन विहीनमपि जातुचित् ॥ ६८ ॥
चक्रवर्तवशेनैव गमनं परिवर्तते ।
कोलाहलेन तस्यास्ति लोकोऽयं परिपूरितः ॥ ६९ ॥
तस्य दासत्वमाश्रित्य विमुक्तो भवबन्धनात् ।
तद्भीतिं हृदये धृत्वा सुखं प्राप्नोति शाश्वतम् ॥ ७० ॥
रागात्सर्वं निपीयैव मदमानो नरस्तथा ।
लोकावृत्तेक्षणं सर्वं वेत्तीदं तृणवद्यथा ॥ ७१ ॥
रागिणो रागचषकान्न पिबन्ति सदा जनाः ।
सरकं नाम गृह्णीयात्तेषां कोऽपि न कुत्रचित् ॥ ७२ ॥
धनिनो रूपवन्तश्च शतशोऽथ सहस्रशः ।
चिरायुषोऽपि पर्यन्ते निमग्नाः(?) काव्यवारिधौ ॥ ७३ ॥
नावशिष्टं तु तन्नाम किंचित्सत्यं पुनः क्षितौ ।
सखायेह(?) परत्रापि कथा नित्यैव रागिणाम् ॥ ७४ ॥
श्रुतमेतत्पुरा कश्चिच्छिष्यो दीक्षां मुहुर्मुहुः ।
मह्यं देहीति भगवन्विज्ञप्तिं गुरवेऽकरोत् ॥ ७५ ॥
स च तेन ततः पृष्टो यदि रागान्वितं मनः ।
तव कुत्रापि संजातं ततो दीक्षां ददामि ते ॥ ७६ ॥
यावन्न मातृकापाठं प्रकरोति नरः क्वचित् ।
वेदशास्त्रार्थकुशलस्तावद्भवति मूढधीः ॥ ७७ ॥
त्यक्त्वा लोकभयं रागप्रीतिं कुरु दिवानिशम् ।
कृत्वास्य निर्णयं जन्तुर्मुक्तिं प्राप्नोत्यसंशयम् ॥ ७८ ॥
दिष्ट्या दैवेन संसारसंभूतभयवर्जितः ।
त्यक्त्वान्यत्करणीयं तन्मार्गे हंसप्रवेशितः ॥ ७९ ॥
यदि मे मूर्धजा दुग्धसवर्णत्वमुपागताः ।
तथापि मानसे रागः प्रत्यहं तरुणायते ॥ ८० ॥

एकदा पथि गच्छन्तं स्वेच्छया केवलं शनैः ।
प्रादुर्भूता नभोवाणी मामवोचन्मुहुर्मुहुः ॥ ८१ ॥
एकं रसमयं शीघ्रं प्रबन्धं कुरु सांप्रतम् ।
यं श्रुत्वा मुनिवर्गोऽपि भवेत्कामविमोहितः ॥ ८२ ॥
असारे खलु संसारे न किंचिदवशिष्यते ।
तस्माच्छास्त्रकथा लोके स्थिरा कल्पशतानि ते ॥ ८३ ॥
इति श्रुत्वा वचो दिव्यं किं विचार्य पुनः पुनः ।
ज्ञात्वा श्रुतं पराध्यानकृतमद्य मयाद्भुतम् ॥ ८४ ॥
संदीप्तः क्रियते रागवह्निर्यस्योष्मतापिताः ।
पतन्ति गगनात्तारा निर्जराश्यस्तबिन्दवः ॥ ८५ ॥
दृश्यते सकलं विश्वं भारतीवशगं पुनः ।
सा चेद्वक्रे कथं मौनं कुर्याद्बुद्ध्या हि संश्रितः ॥ ८६ ॥
वेद एव हि सर्वस्य प्रमाणं परिकीर्तितम् ।
तदेव मधुरं चेत्स्यान्नास्त्यन्यल्लाभकारणम् ॥ ८७ ॥
यदेतद्दृश्यते सर्वं पुराणमथ वा नवम् ।
वचनाद्विद्धि संभूतं नात्र कार्या विचारणा ॥ ८८ ॥
कुरु मार्गं यथापूर्वमिति श्रुत्वा वचोविधिः ।
वचनाद्देवदेवस्य चक्रे सर्वं समाहितः ॥ ८९ ॥
वेदस्मृतिपुराणानि तर्कव्याकरणानि च ।
वचनेन निबद्धानि तस्माद्वाक्यमयं जगत् ॥ ९० ॥
सत्यासत्यतया वाक्यं द्विधा तत्कथितं बुधैः ।
सूनृतं दुर्लभं लोके सर्वत्रैवेतरद्वचः ॥ ९१ ॥
ऋतादृते परो धर्मो नास्ति कश्चित्प्रियः शुभः ।
नित्यं सत्यं प्रवक्तव्यं सर्वसिद्धिमुपेच्छता ॥ ९२ ॥
भूषणं द्वयमेवास्य सत्यताप्यल्पभाषणम् ।
क्षमाशीलं यथा लोके पुरुषस्य सुमेधसः ॥ ९३ ॥

अधुना तद्द्वयोपेतः प्रबन्धो रससंयुतः ।
रागिणां वल्लभः सोऽयं सतां भवतु प्रीतये ॥ ९४ ॥

इति यवनशास्त्रपारंगमपण्डितश्रीवरविरचिते कथाकौतुके प्रथमं कौतुकम् ।

---

द्वितीयं कौतुकम् ।

अभूदनेकभूपालमौलिलालितशासनः ।
प्रतीच्यां विक्रमोदारस्तैमो राजा क्षितीश्वरः ॥ १ ॥
यद्वाग्बल····माश्रित्य सदा सागरमेखला ।
मेदिनी मोदिता सर्वसंपत्तिसहिता परा ॥ २ ॥
प्रणामसमये नित्यमुपर्युपरि भूभुजाम् ।
पततां मुकुटैर्यस्य भाति मौलिमयं वपुः ॥ ३ ॥
न धर्मात्सुखदं किंचिज्ज्ञातं तद्धर्मचेतसः ।
कालतो जायते यस्य न भयं का कथारिणाम् ॥ ४ ॥
यन्नामनि श्रुते गर्भाः पतन्त्यहितयोषिताम् ।
नाधिव्याधिभयं लोके यस्मिञ्छासति मेदिनीम् ॥ ५ ॥
जोलेखा नाम तनया तस्याभूत्सुमनोरमा ।
कविः कवयितुं को वा यद्रूपं शक्तिमान्भवेत् ॥ ६ ॥
यथामति विधातव्ये तदीये रूपनिर्णये ।
तेनेयं रसनात्यर्थनामधेयाभिजायते ॥ ७ ॥

श्यामा कुरङ्गनयना तनुमध्यभागा
संपूर्णचन्द्रवदना पिकवाग्विलासा ।
बिम्बाधरा गजगतिः स्तनभारनम्रा
मुक्तानुकारदशना नृपकन्यका सा ॥ ८ ॥

अलकावलिभिस्तस्याः शुशुभे वदनं शुभम् ।
निधानमिव संपूर्णं घ्रातं राजिलराजिभिः ॥ ९ ॥
दृष्टमत्यद्भुतं तस्यां द्वयमात्मविरोधकृत् ।
अहो मुखस्वरूपोत्थं तमी च कचसंभवा ॥ १० ॥

वक्षोजौ नीरजप्रख्यौ सुवृत्तौ सूक्ष्मरूपिणौ ।
लावण्यसागरोद्भूतौ कार्पूराविव बुद्बुदौ ॥ ११ ॥
नाद्रवद्रजतं सास्यं भुजयोर्हिमसंततिम् ।
नाकरोद्विसनी काण्डो रन्ध्रयुक्तो मृगीदृशः ॥ १२ ॥
तारहारावलिः कण्ठे कम्बुकण्ठ्या विराजते ।
सेवितुं मुखशीतांशुं प्राप्ता नक्षत्रसंततिः ॥ १३ ॥
कथं निर्मलता तस्य वक्ष्यते हरिणीदृशः ।
यां दृष्ट्वा श्वासव्याजेन मालिन्यं दर्पणं ययौ ॥ १४ ॥
यया ते विजिता गत्या हंसा बालमृगीदृशः ।
मध्यभागेन हरयो वनमेव समाश्रिताः ॥ १५ ॥
यां दृष्ट्वाप्सरसश्चक्रुर्नैव नेत्रनिमीलनम् ।
न पुनर्दर्शयामासुः शरीरं स्वं घृणातुराः ॥ १६ ॥
तादृशे जीवलोकेऽस्मिञ्छ्रुतपूर्वा न वीक्षिता ।
रूपलावण्यसंयुक्ता दुर्लभा रसनायिका ॥ १७ ॥
श्रुत्वाद्भुतं रूपमतीव यस्याः पिधाय कर्णौ खलु नागकन्याः ।
निमीलयन्त्यो नयनानि सर्वाः पातालमासाद्य न निर्गतास्ताः ॥ १८ ॥
सदा पद्मालया पद्मा जलजं कथमाश्रिता ।
नूपुरव्याजमाश्रित्य यत्पादाम्बुजमागता ॥ १९ ॥
येनेदं रचितं विश्वं वेधसाद्भुतकर्मणा ।
स एव वक्तुं तद्रूपं शक्तो भवति नापरः ॥ २० ॥
एवं सा नृपतेः कन्या वसन्ती राजमन्दिरे ।
सखीगणावृता नित्यं पाञ्चालीकेलितत्परा ॥ २१ ॥
सौधसंस्थां सदा वायुः सेवितुं सुखशीतलः ।
वाति नैव रविश्चन्द्रः करैः स्पर्शमवापतुः ॥ २२ ॥
विष्णुमाया यथा नाम विश्रुता दृष्टिगोचरा ।
मोहयत्येवमखिलं तथा सा नृपकन्यका ॥ २३ ॥

एवं वसन्त्याः कन्याया अन्तर्वर्तिन्यलक्षिता ।
जनयिष्यति यत्तस्याः कालमाया शृणुष्व(?) तत् ॥ २४ ॥
इन्द्राद्याः सकला देवा मोहिता यस्य मायया ।
नमस्तस्मै भगवते पराय परमात्मने ॥ २५ ॥
एकदा केलिविश्रान्ता जोलेखा निद्रिताभवत् ।
प्रसाधिकाङ्के पादाब्जयुग्मं न्यस्य निशामुखे ॥ २६ ॥
अभूत्सा तादृशी रात्रिः सुखयुक्ता शरीरिणाम् ।
यस्यां तु निद्रिता लोका न प्राज्ञायत किंचन ॥ २७ ॥
चञ्चच्चञ्चुपुटा यस्यां चकोरा मोदिताशयाः ।
पिबन्तश्चन्द्रिकां रम्यां कुर्वन्तो मधुरस्वरम् ॥ २८ ॥
न हि कश्चित्प्रबुद्धोऽभूद्रजनीरमणं विना ।
गतिः सदागतेरासीन्न परस्यापि कस्यचित् ॥ २९ ॥
सुप्तसंयुक्तमनसः सर्वे प्राहरिकास्तदा ।
प्रतीहाराश्च सौवर्णवेत्रेषु धृतमस्तकाः ॥ ३० ॥
आसन्मदा सप्त(?)मीनाः सारसा रववर्जिताः ।
एक एव वराकोऽभूच्चक्रवाकोऽतिकातरः ॥ ३१ ॥
सुखसुप्ता निरीक्षन्ती सुशीलाब्जं रविप्रिया ।
कृत्वा कमलिनीपद्ममध्ये मधुपनालकम् ॥ ३२ ॥
एवं सा नृपतेः कन्या गुणरूपसमन्विता ।
शयाना रत्नपर्यङ्के कुसुमास्तरणे शुभे ॥ ३३ ॥
ततोऽद्भुतगुणा भाला निद्रिता चर्मचक्षुषा ।
किं त्वन्तःकरणेनेयं प्रबुद्धा वाभवत्तदा ॥ ३४ ॥
अर्धरात्रे गते सुप्ते जने कंचिच्छुचिस्मिता ।
प्रविशन्तं गृहद्वारात्सुप्तेऽपश्यन्नृपात्मजा ॥ ३५ ॥
सुमस्तकं सुन्दरभालदेशं सुभ्रूविलासं शुभपक्ष्ममालम् ।
सुलोचनं शुद्धकपोलभागं सुनासिकं हास्यमनोहरास्यम् ॥ ३६ ॥

सुचारुवदनं रम्यग्रीवं सिंहासमद्भुतम्।
पीनोरस्कं महाबाहुं सुकुमारं सुवाससम् ॥ ३७ ॥
काकपक्षधरं श्यामं रोमराजिविराजितम्।
सुनाभिं समगुल्फं च सुचारुचरणाम्बुजम् ॥ ३८ ॥
चन्दनेनोपलिप्ताङ्गं वरताम्बूलधारिणम्।
सर्वलक्षणसंपन्नं सुशोभितशरीरकम् ॥ ३९ ॥
शोभानिर्जितशीतांशुं प्रभास्तमितभास्करम्।
सभाबृहस्पतिसमं प्रभवाद्भुतदर्शनम् ॥ ४० ॥
अनङ्गतोद्धतं दोपं संप्रमार्ष्टुमुपागतम्।
साक्षात्काममुपादाय तनुं मोहयितुं जगत् ॥ ४१ ॥
अदृष्टपूर्वं नो जातु गतं श्रुतिपथं कचित्।
अनुभूतं न मनसा परं सुरसुतोपमम् ॥ ४२ ॥
हृत्वा चैतन्यसर्वस्वं हृत्वा चिन्तातुरं मनः।
दर्शयित्वा निजं रूपं निर्गतं तद्गृहात्पुनः ॥ ४३ ॥ (कुलकम्)
दृष्ट्वाद्भुततरं भावं स्वप्ने सति फलप्रदे।
पुलकाङ्कितसर्वाङ्गा ध्यायन्ती तं हृदि स्थितम् ॥ ४४ ॥
भीता सा नृपतः कन्या हरिणीहारिलोचना।
प्रबोधमागता यावत्तमी तावदुपारता ॥ ४५ ॥
प्रभातप्रायां रजनीं विलोक्यानन्दनिर्भराः।
दासीगणयुताः सख्यो विचित्राभरणाम्बराः ॥ ४६ ॥
सौष्णातिकाः समायाता सेवितुं तां नृपात्मजाम्।
हसन्त्यश्चैव गायन्त्यः पञ्चमं स्वरमद्भुतम् ॥ ४७ ॥
प्रबुद्धा सा रवौ व्योम नीलनीरङ्गिकान्तरात्(?)।
सौवर्णाण्डोपमे कालकुहनेन निदर्शिते ॥ ४८ ॥
व्योममानसतारौघहंससेनायिते रवौ।
विजहौ भूपतनया निद्रां दृष्ट्वाद्भुतं ततः ॥ ४९ ॥

प्राचीमस्तकसंलीने सुवर्णकलशोपमे ।
भास्करेऽभ्युदिते तावत्प्रबुद्धा सा नृपात्मजा ॥ ९० ॥
उत्थिता शयनाद्यावत्तावत्सर्वसखीजनः ।
विधाय प्रणतिं सेवारम्भं चक्रे समाहितः ॥ ९१ ॥
काचिन्मज्जं विधायाशु कज्जलं हरिणीदृशः ।
समानिनाय पुरतो नयने तेन चाञ्जयत् ॥ ९२ ॥
काप्यङ्गरागमादाय मृगनाभिपरिष्कृतम् ।
तस्याः संभावयामास शरीरं तेन सुन्दरम् ॥ ९३ ॥
काचिद्बबन्ध सुदृशो वस्त्राण्याभरणानि च ।
काचिद्धारावलिं कण्ठे निष्कं काचिन्मनोहरम् ॥ ९४ ॥
काचित्कटककेयूरान्काचित्ताम्बूलमुत्तमम् ।
समानीय पुरस्तस्याश्चक्रे भूषां मनोरमाम् ॥ ९५ ॥
विहितेत्यद्भुते तस्या भूषणे भूषणोत्तमैः ।
तावद्दर्पणमादाय सखी काचिदुपागता ॥ ९६ ॥
अपश्यद्दर्पणे बाला स्वमात्मानं सुभूषितम् ।
न पुनस्तं पतिं कान्तं स्वप्ने दृष्टं हृदि स्थितम् ॥ ९७ ॥
सखीभिः सहिता क्रीडोद्यानमेवाविशत्तदा ।
विचिन्वन्ती वरं तत्र हृदि मग्नं सुरोपमम् ॥ ९८ ॥
तदुद्यानं हिमाम्भोभिर्लतापत्रावलम्बितैः ।
सहितं शुशुभे तावन्मौक्तिकैरिव सर्वतः ॥ ९९ ॥
नानावृक्षसमाकीर्णं सदापुष्पोपशोभितम् ।
सर्वर्तुगुणसंयुक्तं द्विजालिकुलनादितम् ॥ ६० ॥
सारसाकुलनिर्ह्रादाः कचित्कोकिलनिःस्वनः ।
कचिन्मधुकरारावस्तत्रासीत्सुमनोहरः ॥ ६१ ॥
प्रातः फुल्लारविन्देभ्यो निर्गच्छन्तो मधुव्रताः ।
जवेन भयदास्तासां नाराचा इव मान्मथाः ॥ ६२ ॥

क्रीडन्त्यो विविधैर्भावैर्हसन्त्यश्च परस्परम् ।
ताः पुष्पावचयं कृत्वा जगुस्तस्याः पुरः सदा ॥ ६३ ॥
सापि राजेन्द्रतनया तदालापपरा मुदा ।
सुप्तालोकितजीवे च संभाषणरताभवत् ॥ ६४ ॥
ताभिर्विरचिता मालाः पश्यन्ती बाह्यचक्षुषा ।
किं तु हृत्पद्ममध्ये तं स्थितं सत्येन सुन्दरम् ॥ ६५ ॥
मिथ्याक्रीडारसपरं ताभिस्तन्मानसं मुदा ।
परं तद्ध्यानसंलीनसंवर्तसुखसंयुतम् ॥ ६६ ॥
इति चिन्तयती बाला तन्मनस्का सुमध्यमा ।
किं दृष्टं विधिवैचित्र्यं केन मेऽपहृतं मनः ॥ ६७ ॥
द्रक्ष्यामि क पुनः कान्तं तदीयं मुखपङ्कजम् ।
विलोचनयुगं यत्र मदीयं भ्रमरायितम् ॥ ६८ ॥
अज्ञातवसतिं कान्तं स्वप्ने कस्माद्विलोकितम् ।
अव्यक्तनामधेयं तं कथमन्वेषयाम्यहम् ॥ ६९ ॥
एवं चिन्तातुरा बाला चित्रसंस्थेव तत्र सा ।
ध्यायन्ती तं पतिं तावद्दिवसोऽस्तमुपाययौ ॥ ७० ॥
सुखिनां सुखदो नित्यं हास्यक्रीडादिवस्तुभिः ।
निद्रया दुःखितानां च शोकविस्फूर्तिकारिणी ॥ ७१ ॥
प्रादुर्भूता ततो रात्री रात्रीशकररञ्जिता ।
कुर्वन्ती द्विगुणां चिन्तां तस्या बालमृगीदृशः ॥ ७२ ॥
तस्यां रात्रौ पुनर्बाला भूपतेः कन्यकातुरा ।
अकरोद्विप्रयोगेन करुणाक्रन्दनं परम् ॥ ७३ ॥
सत्यं तद्विरहोद्भूतश्यामैरेव समन्ततः ।
भिन्नं ताराच्छलेनेदं सच्छिद्रं सत्पते(?) नभः ॥ ७४ ॥
ततो वीणां समादाय नाडीतन्त्रं समाकुलम् ।
मूर्छनाग्रामसहितं चकारातुम्बरं ततः ॥ ७५ ॥

यदि भूपोऽसि कृपया स्वं नाम कथयस्व मे ।
इति तारापतेर्भूमौ कथमागमनं भवेत् ॥ ७६ ॥
बलान्मनो मेऽपहृतं विहितं नैव दर्शनम् ।
चिन्ता वितीर्णा चिन्त्यानां न कथं नाशयिष्यति ॥ ७७ ॥
पृच्छामि किं वियोगार्ता न जाने नाम तावकम् ।
कथं ते विदितं स्थानं पश्यामि भुवि दुर्लभम् ॥ ७८ ॥
मा भूत्कस्यापि लोकेऽस्मिन्हृदि चिन्ता यथा मम ।
न मे स्वस्थं मनो नैव प्रियं पश्यामि सुन्दरम् ॥ ७९ ॥
अद्यापि मन्मथो नाशद्व(?)द्यानोपरिसंस्थितम् ।
न निद्रायां रुचिर्नैव जायते जातु मे जरे ॥ ८० ॥
चिन्तादावाग्निशान्त्यर्थं कृपाम्भो यदि मुञ्चसि ।
सुधामयाभ्रतुल्यस्य का क्षतिस्तव जायते ॥ ८१ ॥
न सा बुद्धिमतां बुद्धिर्मुखमेवातिदुःखितम् ।
नयेत्कथं वह्निदग्धमग्नावेव निवेशयेत् ॥ ८२ ॥
सुखोद्यानेऽहमेवैका दुःखकण्टकवर्तिता ।
जाता शृङ्गारलतिकानन्दपुष्पौघसंयुता ॥ ८३ ॥
इन्द्रजालं न ते वेद्मि कुतोऽपि परिशिक्षितम् ।
यद्दर्शनेन चैकेन सर्वं मेऽपहृतं त्वया ॥ ८४ ॥
सुमनःसुकुमारोऽयं तनुर्मे तनुतां गतम् ।
निद्रां न लभते चिन्ता कण्टकास्तरणेऽधुना ॥ ८५ ॥
एवं वियोगविधुरा चिन्ताशतसमाकुला ।
प्रलापं सकलां रात्रिमकरोत्सा नृपात्मजा ॥ ८६ ॥
तस्यां रात्रौ व्यतीतायां प्रभाते सा सुलोचना ।
बाष्पाम्बुक्लिन्नवस्त्रापि ममार्ज वदनं शुभम् ॥ ८७ ॥
यथा न परिवेत्तीदं कश्चित्कर्म मया कृतम् ।
संतोषपरताबाला सखीभिः सह साभवत् ॥ ८८ ॥

इति यवनशास्त्रपारंगमपण्डितश्रीवरविरचिते कथाकौतुके द्वितीयं कौतुकम् ।

तृतीय कौतुकम्।

रागबाणासनादिच्छा वाणो यदि विनिर्गतः।
तदा दृढतरस्यापि न कार्यं बुद्धिचर्मणः॥ १॥
प्रसिद्धिर्बाह्यतो लग्नः कुर्यादन्तर्व्यथां शरः।
स हि चात्यन्तरालीनो वहिर्व्रणविधायकः॥ २॥
*कथयन्त्येव विबुधाः कथं गोपयितुं परम्।*
सौगन्ध्यको भवेच्छक्तश्चित्तरागेण नाभिजम्॥ ३॥
मृगनाभिपदच्छन्ना सौगन्ध्येनैव लक्ष्यते।
तथैव लक्षणै रागो मनःसंस्थायिरागिणाम्॥ ४॥
तयान्तर्धाय तद्रागि यदप्यन्तः सुरक्षितः (?)।
हृद्गतं बहिरायातो भित्त्वेच्छार्ककरैर्द्रुतः॥ ५॥
जोलेखा नृपतेः कन्या विरहाकुलिताशया।
दिने दिने क्षामतनुः स्वयं तनुतराभवत्॥ ६॥
नावेदात्मसुखं किंचिद्वहिरन्तस्तथाबला।
न प्रजल्पति केनापि न पाठयति वा शुकम्॥ ७॥
नापि केलिकलां कांचिदकरोत्सा सुमध्यमा।
त्यक्ताशना जीवितापि परं तत्संगमाशया॥ ८॥
सासुश्चद्वाष्पनिकरं क्षणं श्वासात्सुलोचना।
क्षणमुन्मत्तवद्बाला भ्रमन्ती विगतत्रपा॥ ९॥
विलोक्य पाण्डुवर्णां तां भृशं क्षामतनुं ततः।
भयेनोद्विग्नमनसः सर्वेऽन्तःपुररक्षकाः॥ १०॥
परं दासीगणस्तत्र भयेनातुरतामगात्।
सखीभिः सह तद्रूपवैपरीत्यं विलोक्य तत्॥ ११॥
अमंस्त सहसा सख्यः कथयन्त्यः परस्परम्।
अकस्मात्किमिदं जातं केनेदं कर्म वा कृतम्॥ १२॥
स्वं स्वं बुद्धिबलं सम्यक्त्वमाश्रित्य भयातुराः।
नानार्थकुशलाः प्रोचुर्हावभावसमन्विताः॥ १३॥

तासामेकावदत्तत्र गच्छन्नागच्छनेव वा ।
कोऽपि नालोकितोऽस्माभिर्ज्ञातुमेतद्विधिः क्षमः ॥ १४ ॥
अपरापि वदन्मन्ये जिता बालमृगीदृशा ।
देवकन्याः पुनस्ताभिः क्रूरदृष्ट्या किमीक्षिता ॥ १५ ॥
तेनेयं तनुतां याता म्लानवर्णमनोरमा ।
नान्यं निमित्तं मन्येऽहं दैवमत्र हि कारणम् ॥ १६ ॥
अन्यापि चिन्तया युक्ता प्रोवाच वचनं शनैः ।
मन्यमाना स्वमेवेयं रूपेणाप्रतिमं भुवि ॥ १७ ॥
किं वा तद्बिम्बितं दृष्ट्वा मुग्धा दर्पणमण्डले ।
तच्चिन्तयैव तनुतां गता भूपतिकन्यका ॥ १८ ॥
अथापरावदत्तत्र प्राप्तकालमिदं वचः ।
एवं जानाम्यहं सख्यः कारणं शृणुताधुना ॥ १९ ॥
तनुं यन्त्रे लिखित्वास्या मान्त्रिकेनापि केनचित् ।
कार्श्यं किं वाबला नीता मन्त्रैरुच्चाटनादिभिः ॥ २० ॥
तथापरावदत्तत्र तासां बुद्धिबलोर्जिता ।
जानेऽहं कारणं सख्यः सत्यं तत्संभविष्यति ॥ २१ ॥
किंचित्स्वप्नेऽनया दृष्टं सत्यं तन्मन्यमानया ।
तेन चिन्ताभरेणास्या गतं शिथिलतां वपुः ॥ २२ ॥
एवं ताः सहिताः सर्वा भयाकुलितमानसाः ।
कर्मणोऽन्तं नाधिजग्मुः सत्त्वतो विस्मयान्विताः ॥ २३ ॥
तस्मिन्सखीजने लब्धपरमासे मृगीदृशः ।
तावन्समागता धात्री कर्तुं तत्कर्मनिर्णयम् ॥ २४ ॥
सापि सर्वार्थकुशला रासोल्लासविचक्षणा ।
त्रिजगन्मोहनी दक्षा मोहिनीवापराभवत् ॥ २५ ॥
सामीप्यकारिणी सम्यक्स्त्रीपुंसोर्विप्रयुक्तयोः(?) ।
प्रेमचित्तेन यस्यास्ति कर्तुं तेनान्वितं क्षमा ॥ २६ ॥

१. 'स्त्री च पुमांश्च' इति द्वन्द्वे 'अचतुर–' (५।४।७७) इति पाणिनिसूत्रेण समासा-

चित्रासक्तिकथासक्ता बाले वयसि सा क्षमा।
कस्यापि हर्तुं हृदयं केनापि हृतमाभसा ॥ २७ ॥
एकदागत्य सा रात्रौ विधाय प्रणतिं पुरा।
कथयामास सेवां तां कृतां तस्याः पुरातनाम् ॥ २८ ॥
लावण्योद्यानमध्ये त्वां मन्ये कुसुममञ्जरीम्।
त्वच्चित्ताः कण्टकयुताः सर्वेनीराजलोचनाः ॥ २९ ॥
सदा हर्षयुतास्ते तु मानसं वरवर्णिनि।
चिन्ताविरहिता नित्यं भव प्रहसिताननां ॥ ३० ॥
त्वद्भाग्यवशतः सुभ्रु प्राप्तासि पदमुत्तमम्।
श्रोतुमर्हस्यनाथाया विज्ञप्तिं मम सांप्रतम् ॥ ३१ ॥
शय्यागृहेऽहमेवैका तदोद्दिष्टं च सुन्दरि।
गर्भच्छेदादिकं सर्वं यदाभूज्जन्म ते शुभम् ॥ ३२ ॥
सुगन्धद्रव्यसंयुक्तैर्वारिभी रचितं मया।
स्नानमुत्तमगन्धेति तदा ते नाम निर्मितम् ॥ ३३ ॥
अनन्तरं मया सुभ्रु·········क्तं स्तनमर्पितम्।
यत्पीत्वा नयनानन्दकारिणीन्द्रकलोपमा ॥ ३४ ॥
सर्वलक्षणसंपूर्णा रूपातिशयशालिनी।
सुकुमारानवद्याङ्गी वर्धमाना दिने दिने ॥ ३५ ॥
स्वेच्छयैव यदा सुभ्रु निद्रामुकुलितेक्षणा।
क्षणमेकं प्रजातासि रजन्यां दिवसेऽपि वा ॥ ३६ ॥
कदोत्तिष्ठति कल्याणयुतेयं भामिनी पुनः।
इत्यहं जागरपरा तदा चिन्ताकुलाशया ॥ ३७ ॥
यदा त्वं चञ्चलापाङ्गि गतौ जातमनोरथा।
सुकुमाराङ्घ्रियुगला पतन्ती पुनरुत्थिता ॥ ३८ ॥

न्तविधिमकृत्वा 'स्त्रीपुंसो.' इति ग्रन्थकृतः प्रयोगोपादानं प्रमादजम्. समासान्तविधेर-नित्यत्वात्कथंचित्समाधेयम्. 'स्त्रीपत्यो.' इति पाठकल्पनं वा.

युक्ता हर्षेण महता ज्ञातभाग्योदयाप्यहम्।
पूजयन्ती सुशिरसा जा(या)ता त्वत्पदपङ्कजम् ॥ ३९ ॥
यद्यद्वस्तु त्वया सुभ्रु प्रार्थितं भुवि दुर्लभम्।
तत्तत्त्वच्चित्तरक्षार्थं समानीय समर्पितम् ॥ ४० ॥
एवं तदा मया सेवा विहिता ते सुमध्यमे।
अधुनापि मनो नूनं शुश्रूषापरमस्ति मे ॥ ४१ ॥
जाने चिन्तापराधीनं मनो नीरजलोचने।
तावकं मत्सकाशात्तां किं गोपयसि भामिनि ॥ ४२ ॥
सत्यं वदाधुना केन विप्रियं विहितं परम्।
अहो चित्तानभिज्ञापि किं मग्ना शोकसागरे ॥ ४३ ॥
कथमुन्मत्तरूपैव जातासि वद सुन्दरि।
वृथा चिन्तापरास्थापि कथं वा चारुलोचने ॥ ४४ ॥
मुखाम्भोजं कथं चारु म्लानवर्णं दिने दिने।
मुहुर्विनिर्गताः श्वासा दावाग्निसदृशः कथम् ॥ ४५ ॥
चिन्तानिशागमे भानु····रूपास्तं कथं गतः।
यौवनोषसि किं चन्द्रकलेव तनुतां गता ॥ ४६ ॥
किं तु जानामि केनापि शशिरूपेण ते हृतम्।
चैतन्यं वद सत्यं मे तमेवान्वेषयाम्यहम् ॥ ४७ ॥
स्वर्गस्थो यदि देवेभ्यो रूपमादाय निर्मितः।
अविचिन्त्यगतिस्तद्वत्कश्चित्सुभ्रु विलोकितः ॥ ४८ ॥
त्वदाज्ञया समाराध्य मन्त्रं सद्यः फलप्रदम्।
समानीय स्वबुद्ध्या तं दर्शयिष्यामि सांप्रतम् ॥ ४९ ॥
गन्धर्वजातिसंभूतो यदि वा वनगोचरः।
कश्चिदालोकितो भद्रे रूपेणाप्रतिमो भुवि ॥ ५० ॥
त्वदाज्ञामात्रमासाद्य फुल्लेन्दीवरलोचने।
विना यत्नेन तं बद्ध्वा तवाग्रे स्थापयाम्यहम् ॥ ५१ ॥

किमाश्चर्यं नृलोकस्थं वशे कर्तुं नरं मतेः।
तवाज्ञया मया वाच्यो विधिरपि विधीयते ॥ ५२ ॥
एतावच्चारुनयने मय्यस्ति बलमुत्तमम्।
त्यज चिन्तां कुरुष्वाज्ञां कार्यं ते साधयाम्यहम् ॥ ५३ ॥
श्रुत्वा धात्रीवचः कर्णपीयूषमिव तत्र सा।
विमुच्य सहसा श्वासान्प्रोवाच नृपकन्यका ॥ ५४ ॥
सत्यं विना परं किंचिद्वक्तुं न विदितं मम।
बाष्पतारावलयितं कृत्वा सुखसुधाकराः ॥ ५५ ॥
हा मातर्नास्ति वक्तव्यं मदीक्षार्गलितं मम।
मनःकोशमिदं मोक्तुं दुर्लभा बुद्धिकुञ्चिका ॥ ५६ ॥
तथापि शृणु वक्ष्येऽहं कौतुकं यदि ते हृदि।
सत्यमेतत्र विश्वासस्त्वां विनान्यत्र मे क्वचित् ॥ ५७ ॥
स्वप्नेति यो मया दृष्टः कश्चिल्लोकेऽतिसुन्दरः।
तस्य रूपमहं वक्तुं न क्षमाब्दशतैरपि ॥ ५८ ॥
यद्ययं मन्मथो नूनं स कामः कामनां विना।
न जातु जायते पुंसां काचित्सा मानसेन मे ॥ ५९ ॥
दूरस्थो वर्णहीनः किं हंसस्तत्साम्यमाचरेत्।
परस्परमहंसोऽयं मम मानससंस्थितिः ॥ ६० ॥
तन्नामरहितः स्वादुर्भवेत्कटुतरो रसः।
तस्याभिधेयसंयुक्तस्तिक्तो मधुरतामियात् ॥ ६१ ॥
किं करोमि भृशं मातश्चिन्ता मनसि सांप्रतम्।
कृतोपायमनाथां मां रक्ष बुध्या यथा पुरा ॥ ६२ ॥
श्रुत्वा नृपसुतायास्तद्वचनं जातसंभ्रमा।
चित्रस्थेवाभवत्तत्र धात्री ध्यानपरा पुनः ॥ ६३ ॥
पूर्वमुक्तं त्वया सर्वं कार्यं ते साधयाम्यहम्।
पश्चाच्छ्रुत्वाद्भुतं तस्या उपदेशपराभवत् ॥ ६४ ॥

श्रृणुष्वावहिता सुभ्रु शरीरं मा वशोषय[1] ।
अनुक्तनामधेयस्य कथमन्वेषणं भवेत् ॥ ६५ ॥
तामुवाचेति प्रथमं कार्यं कस्यापि मायिनः ।
भातीदं मायया कुर्वन्नद्भुतं कर्म नित्यशः ॥ ६६ ॥
दर्शयित्वाद्भुतं रूपं मया विरचितं जने ।
अपयातीव मायावी बलादाहृत्य मानसम् ॥ ६७ ॥
इत्याकर्ण्य नृपसुता प्रोवाच वचनं शनैः ।
रूपं दर्शयितुं शक्तो न मायावीदृशं क्वचित् ॥ ६८ ॥
इत्युक्तेऽपि तया धात्री सान्त्वपूर्वमिदं वचः ।
उवाच मन्यमानाहं सुप्तेयमिति सुन्दरि ॥ ६९ ॥
स्वप्नो मायाविधेः सोऽयं बहुधा परिकीर्तितः ।
भावितो दृष्टिजः श्रौतो दिष्टक्षेत्रोत्थितस्तथा ॥ ७० ॥
वृथायं सकलः सुभ्रु भव्योऽपि फलदा क्वचित् ।
असत्यवचनात्तस्मान्मा चिन्तां मानसे कुरु ॥ ७१ ॥
तामुवाच ततो बाला तनया चक्रवर्तिनः ।
यदि स्वप्नो वृथा किं तद्वश्या नित्यं स्मेरसः(?) ॥ ७२ ॥
कथयन्त्येव सुधियः समशीलान्वितं द्वयम् ।
सत्यं सत्येन संयुक्तमितरेणेतरद्वचः ॥ ७३ ॥
तामुवाच ततो वृद्धा साध्वी चिन्ताकुलाशया ।
बुद्धियुक्ता त्वमेवैका मुञ्चेमं दुःखसंचयम् ॥ ७४ ॥
यदेयं मत्करे कार्यं भवेन्मातः कथं पुनः ।
त्वमेव दुःखसंयुक्तं करोमीति वदाधुना ॥ ७५ ॥
यातं हि मत्करे विद्धि कार्यं नूनमसंशयम् ।
तच्चिन्ताकुलितं नित्यं न वशे मम मानसम् ॥ ७६ ॥

---

१. परस्मैपदिनः श्रुधातोर्लोट्येवंविधप्रयोगकरण ग्रन्थकर्तुः प्रमादः. 'श्रृणु चाव–' इति वाच्यश्च.

नित्यं प्रतिष्ठितं चित्रं मम मानसमन्दिरे ।
तथा दृढतरं मातः शिलारेखेव सांप्रतम् ॥ ७७ ॥
न वायुवेगवन्नाम्भो यथा खण्डयितुं क्षमः ।
शिलाविरचितां रेखां मनश्चित्तां वचस्तव ॥ ७८ ॥
एवं चिन्तातुरं ज्ञात्वा चिन्तारागेण तन्मनः ।
उपदेशाक्षमा धात्री तूष्णीमासीत्सुविस्मिता ॥ ७९ ॥
अविरुद्धगतिः सा तु नृपमन्तःपुरस्थितम् ।
प्रणम्य कन्यावृत्तान्तं तदग्रेऽकथयच्छनैः ॥ ८० ॥
स भूपतिः समाकर्ण्य तद्वचं विस्मयान्वितः ।
मन्यमानो बलयुतां संसारे भवितव्यताम् ॥ ८१ ॥
वीरं तन्मानसं पुंसां यत्र रागो निवारितः ।
स हि संसारसंभूतां चिन्तां दूरं करिष्यति ॥ ८२ ॥
सोऽग्निज्वालोपमं नित्यं मध्ये प्रकृतिमास्थितः ।
क्षमाचैतन्येन्धनौघं तदहं भाति(?) सर्वतः ॥ ८३ ॥
नापवादभयं जातु जायते रागिणः क्वचित् ।
तृणतुल्यो भवेत्तस्य सदा वाच्यगिरिर्महान् ॥ ८४ ॥
यथा यथा सदा निन्दा क्रियते रागिणः परम् ।
तथा तथा तदासक्तं मनो भवति नित्यशः ॥ ८५ ॥
एवं सा चन्द्रलेखेव क्षीयमाना(णा)प्यहर्निशम् ।
वर्षं(?)तावत्ततस्तस्य भाग्येन्दुर्वृद्धिमाययौ ॥ ८६ ॥
एकदा वाष्पपूरस्य संध्यारागारुणस्य च ।
स्थितमध्ये बभौ बाला कलेव शशलक्ष्मणः ॥ ८७ ॥
एवमेवावदत्तत्र विधिना सह केवला ।
अहो भाग्यरविर्नीतः पाण्डुत्वं भवता कथम् ॥ ८८ ॥
तनुर्भाना(?)सुना नम्रा विहिता दवता मम ।
निन्दा शिरस्यलक्ष्या मे मानसं कथमर्पितम् ॥ ८९ ॥

निष्कृपाय त्वया तस्मै दत्तं मन्मानसं करे ।
न जानामि मुहुः किंचित्तस्माद्दुःखं विनापरम् ॥ ९० ॥
निहितं किंतु त्वत्प्रेमज्योतिर्हृदि ममोत्तमम् ।
विदधाति कथं स्वप्ने दर्शनं सोऽतिसुन्दरः ॥ ९१ ॥
निद्रा दरिद्रतां याति कथं तत्स्वप्नसंगमम् ।
पश्यन्त्या मम नैवायं चिरं तिष्ठति शान्तिके ॥ ९२ ॥
भाग्योदयफलं तं तु स्वप्नं जानाम्यसंशयम् ।
येन पश्यामि तं कान्तं सुकुमारं सुलोचनम् ॥ ९३ ॥
यदि भाग्यानि मे दैवात्फलितानीति निद्रया ।
कान्तं संयोजयाम्येनं स्वयं तद्बोधतः स्वकम् ॥ ९४ ॥
एवमुक्तवती बाला तद्वियोगातुरा परम् ।
प्रहरत्रितयं रात्रेः पश्चान्निद्रामुपागता ॥ ९५ ॥
कंचित्स्वापं समासाद्य प्रबुद्धा मनसेव सा ।
यावन्निमीलिताक्ष्येव सोऽपि तावदुपागतः ॥ ९६ ॥
वपुषाद्भुतरूपेणादृष्टपूर्वेण संयुतम् ।
विलोक्यानन्दिता कान्तं बाला जितसुधांशुना ॥ ९७॥
उत्थाय शयनात्तस्मात्पतित्वा पादयोस्ततः ।
विधाय प्रणतिं सान्त्वपूर्वपूजां वचस्तदा ॥ ९८ ॥
त्वमेव गुणिमुक्तौघनायको येन कल्पितः ।
लावण्याम्बुधिसंभूतः सुधांशुरिव दर्शितः ॥ ९९ ॥
त्वच्छिखा साध्वरचिता श्लक्ष्णवक्रत्वशालिनी ।
मन्मनोमृगबन्धार्थं वागुरेव निरूपिता ॥ १०० ॥
त्वमेव सर्वरत्नानां महामणिरिवार्पितः ।
तथा रूपाणां मध्ये त्वं ख्यातः परमसुन्दरः ॥ १०१ ॥
सरला वंशसंभूता रचिता ते तनूलता ।
वदनं लितशोभाढ्यं सुन्दरं वनजोपमम् ॥ १०२ ॥

येनैवाद्भुतलावण्ययुक्तं लोके कृतं वपुः ।
तस्यैव लोकनाथस्य शयनं(शपथं) ते ददाम्यहम् ॥ १०३ ॥
मुञ्च मुञ्चाधुना नाथ मनःकाठिन्यमेव मे ।
मुखादमृतनिःस्यन्दि वचनं देहि सांप्रतम् ॥ १०४ ॥
सत्यं वदाधुना केन तपसा रूपमुत्तमम् ।
प्राप्तं कस्याभिजातोऽसि परं कौतूहलं हि मे ॥ १०५ ॥
कथं मनो मे सुहृतं बलेन भवता पुनः ।
स्वप्नसंदृष्टरूपेण कृपया वद सांप्रतम् ॥ १०६ ॥
यदा स्वप्ने मया दृष्टं त्वदीयं मुखपङ्कजम् ।
तदा प्रभृति मे नाथ चिन्ताशतयुतं मनः ॥ १०७ ॥
प्रहस्योवाच शनकैः किंचिज्ज्ञातमनोरथः ।
सोऽपि सर्वार्थकुशलो मोहयन्निव तां पुनः ॥ १०८ ॥
नाहं देहसमुत्पन्नो न च गन्धर्वसंभवः ।
पञ्चतत्त्वात्मकं सुभ्रु विद्धि मां विधिवंशजम् ॥ १०९ ॥
करोषि यदि मत्प्रेम परमचैव मानसम् ।
यदि वा तद्भवेत्सत्यं वचनं चारुलोचने ॥ ११० ॥
तदा नित्यं समुदिता प्रेमरक्षा विधीयताम् ।
मत्संगमाप्तये सुभ्रु कंचित्कालमुपेक्ष्यताम् ॥ १११ ॥
यथा त्वन्मानसे प्रेम मदीयं वरवर्णिनि ।
तत्प्रीतिसहितं विद्धि मदीयमपि नित्यशः ॥ ११२ ॥
एवमुक्त्वा ततोऽनुक्तनामधेयोऽपि तत्र सः ।
अकृत्वा देशनियमं प्रबुद्धा तावदेव सा ॥ ११३ ॥
उत्थाय शयनाद्भूपकन्यका हर्षनिर्भरा ।
अपश्यन्ती पुनः कान्तं चिन्ताद्वैगुण्यमादधे ॥ ११४ ॥
पूर्वं स्वल्पैव चिन्ताभूत्स्वप्नक्षणवशेन सा ।
कृतेऽपि वाग्विलासेऽस्याः समं तेनाधिकाभवत् ॥ ११५ ॥

स्मारं स्मारं महत्प्रेम कारं कारं कथास्तु ताः ।
धारं धारं मनोमध्ये वारंवारं सुविस्मिता ॥ ११६ ॥
उन्मत्तेवाभवत्तत्र डाकिनी दतु(त्त)लोचना ।
मनःपतङ्गोऽपि पुनर्लीनश्चिन्ताहुताशने ॥ ११७ ॥
प्रभाते पुनरुत्थाय त्यक्त्वा निद्रां सुमध्यमा ।
तच्चिन्तापूर्वचिन्तास्या न स्मृतिः काप्यभूत्तदा ॥ ११८ ॥
बहुदुःखान्वितं तस्या हृदयं हरिणीदृशः ।
तथा न कश्चिच्छक्तोऽभूद्वक्तुं वर्षशतैरपि ॥ ११९ ॥
ततः सा कुमुदस्यारिकलिकेव सुमध्यमा ।
तच्चिन्तार्ककराक्रान्ता मूर्छितेवापतद्भुवि ॥ १२० ॥
क्षणमाक्रन्दनपरा क्षणं प्रहसितानना ।
क्षणं बुद्धिबलोपेता क्षणमुन्मत्तगामिनी ॥ १२१ ॥
क्षणं मालां विदधती मस्तके च करं क्षणम् ।
क्षणं नग्ना विनिर्यान्ती क्षणं दिव्याम्बरावृता ॥ १२२ ॥
क्षणं शयाना भूपृष्ठे महार्हाम्बरलक्षणा ।
अभूत्तद्दुष्करं किंचिल्लोके यन्न त्वया कृतम् ॥ १२३ ॥
एवं विलोक्य तां बालां विरहोत्कण्ठिताशया ।
परिवव्रुस्तदा सख्यस्तारां शशिकलामिव ॥ १२४ ॥
यदि कुत्रापि संभिन्नं सखीनां मण्डलं भवेत् ।
चलिता तेन मार्गेण शीघ्रं शरगतिर्यथा ॥ १२५ ॥
पवनं मुष्टिमध्येऽपि तूलराशौ हुताशनम् ।
धर्तुं शक्तो भवेत्कश्चिन्न हि तन्मानसं कचित् ॥ १२६ ॥
एवं ताः सहिताः सर्वा भयाकुलितचेतसः ।
तमोमस्यान्तिकं गत्वा तद्वृत्तं संव्यवर्णयत् ॥ १२७ ॥

इति यवनशास्त्रपारंगमपण्डितश्रीवरविरचिते कथाकौतुके तृतीयं कौतुकम् ।

---

चतुर्थं कौतुकम्।

शृणु भूपाल ते कन्या किमप्युन्मत्तरूपिणी ।
जाता कस्मान्निमित्तं तु न जानीमो नरोत्तम ॥ १ ॥
राजेन्द्रतनयास्माभी रक्षिता यत्नसंचयैः ।
नोपगच्छति चैतन्यं त्वयोपायो विधीयताम् ॥ २ ॥
श्रुत्वाद्भुतं तु तद्वाक्यमनन्यतनयोऽपि सन् ।
पुलकाङ्कितसर्वाङ्गः क्षणमासीद्विशांपतिः ॥ ३ ॥
ततो विचिन्त्य तद्रक्षाविधिमेकं नरोत्तमः ।
दृष्टवान्नोपायं किंचिद्विना कारागृहं ततः ॥ ४ ॥
उवाचानुचरान्सर्वान्स्वर्णरौप्यमयीं ततः ।
शृङ्खलोच्छृङ्खला नागमूर्तिः शीघ्रं विधीयताम् ॥ ५ ॥
नागपाशोपमेनेयं बद्धा तेनैव भामिनी ।
जहात्युन्मत्तभावं ते तथा चक्रुः समाहिताः ॥ ६ ॥
तस्या बद्धं तु तेनैव बन्धनेनानुजीविभिः ।
निधानमिव नागेन शुशुभे चरणद्वयम् ॥ ७ ॥
अपूर्वगुणरत्नौघशालिनी नृपकन्यका ।
अभूदभ्यधिका नूनं निधानादायसाततः(?) ॥ ८ ॥
तस्माद्बाधकदुर्वर्णरचितेनामुना स्वयम् ।
बन्धनेनैव बद्धा सानायासेनेति मन्यते ॥ ९ ॥
यदैव बद्धं तत्तेन पाशेन चरणद्वयम् ।
बाष्पाकुलेक्षणाप्यूचे सान्त्वपूर्वमिदं वचः ॥ १० ॥
मद्वपू रागपाशेन बद्धमेवास्ति निश्चितम् ।
स एव दुर्निवार्यो मे किमेतेन प्रयोजनम् ॥ ११ ॥
बलेन रहितं नूनं शरीरं कार्श्यमागतम् ।
भारयुक्तं ममानेन वृथा कुरुत माधुना ॥ १२ ॥
बलं नास्त्येव मोक्तुं मे श्वासान्मुहुरुपागतान् ।
कुत्रापि गन्तुं स्थातुं वा तथैव मम सांप्रतम् ॥ १३ ॥

महतानेन पाशेन बन्धनं किं विधीयते ।
काठिन्यकरवालेन किं चित्तोच्छेदनं तथा ॥ १४ ॥
मतिर्नो ध्यानपालस्य शङ्कया यो जयंगतः ।
अङ्कभूमौ स्वयं मग्नं वटबन्धेन पादपम् ॥ १५ ॥
बन्धनादिकृतं दुःखं तस्करायैव दीयते ।
मनो मेऽपहृतं येन स्वप्ने मायां विधास्य(य)ताम् ॥ १६ ॥
दर्शयन्नात्मनात्मानं क्षणं येनावतिष्ठते ।
भाग्यं फलितमेतन्मे यत्प्राप्तं बन्धनं त्विदम् ॥ १७ ॥
अनेनैवाधुना(ध्व)ना कान्तं बध्नामि स्वप्नसंगतम् ।
बद्ध्वा दृढतरं तावत्स्थापयामि प्रियं पुरः ॥ १८ ॥
यावत्पश्यामि तद्वक्त्रं चिरं परमसुन्दरम् ।
किमुक्तं मुग्धया नाथ बद्ध्वाग्रे स्थापयाम्यहम् ॥ १९ ॥
ज्ञातं किं न मया कान्त सौकुमार्यसुदुर्लभम् ।
तस्याशुकं(?) निपतितो रेणुः संदृश्यते क्वचित् ।
स एव जायते नूनं गिरिभारोपमो मम ॥ २० ॥
वरं मे सततं भूयात्पीडेयं बन्धनोत्थिता ।
मा भूत्तस्य कदाचित्सा क्षम्यतां नाथ दुर्वचः ॥ २१ ॥
ईदृशैरेव सद्वाक्यैः कर्मण्यस्मिन्हताशयाः ।
रागिणो रागमास्थाय रमन्ति(न्ते) भुवि भाविताः ॥ २२ ॥
एवं भूपालतनया स्नेहपूरितमानसा ।
तद्ध्यानोपरता नित्यं पीडां नैवान्वमन्यत ॥ २३ ॥
कदाचिद्विप्रयोगार्थकरुणाक्रन्दनान्तरा ।
क्वचित्तचिन्तनोद्भूतपरमानन्दनिर्भरा ॥ २४ ॥
एह्येहि चित्तरागाढ्य नानारागविधायक ।
मन्येऽद्भुतं भवत्कार्यद्वितयं दुष्करं परैः ॥ २५ ॥
कदाचिन्निपुणं नूनं करोष्युन्मत्तरूपिणाम् ।

तथैवोन्मत्तकं बुद्धियुक्तं कर्तुं क्षमो भवान् ॥ २६ ॥
योषिद्विकालके लग्नं यदि स्यान्मानसं परम् ।
तदैवोन्मत्तभावत्वं नयसीति विलक्षणम् ॥ २७ ॥
तच्चिन्तारहितं चेत्स्याद्धृदयं यस्य देहिनः ।
स एव मतिमान्नूनं रचितो भवता भुवि ॥ २८ ॥
रात्रौ तदैव सा बाला बुद्धिशून्यैव मन्दिरे ।
तद्वियोगव्यथाक्रान्ता चित्रासक्तिसमाकुला ॥ २९ ॥
तदेलामञ्जरीतुल्यनेत्रोत्थाम्बुकणैर्मुहुः ।
धरित्रीं कुर्वती पूर्णां मुक्ताभिरिव सर्वतः ॥ ३० ॥
वृथा पात्रेण पिबती शुकं रुधिरशोषकम् ।
अशोचदात्मनात्मानं कृत्वा जवनिकां मुखे ॥ ३१ ॥
जानेऽहं यदि तन्नाम तदा तज्जपतत्परा ।
विदितं यदि तत्स्थानं तत्र यास्यामि मोहिता ॥ ३२ ॥
पीतं मया चिरं रक्तं कलिकावत्स्वदेहजम् ।
तच्चिन्तयान्वितं तद्वत्त्वन्मनोऽहर्निशं परम् ॥ ३३ ॥
दासीकर्म च नोऽस्त्येव तव मां पश्य चक्षुषा ।
युक्ता यदि न ते गेहे भवित्री गृहिणी त्वहम् ॥ ३४ ॥
मा भून्मत्सदृशी काचिद्दुःखिता लोकमण्डले ।
तथैव निन्द्या सर्वत्र भ्रातृबन्धुषु सर्वदा ॥ ३५ ॥
मां दृष्ट्वा जनको मेऽद्य जायते लज्जयान्वितः ।
दासदासीगणः सर्वः क्वापि यातो विहाय त(ता)म् ॥ ३६ ॥
चिन्ताकुला केवलाहं मग्ना शोकाम्बुधौ परम् ।
धिङ्मदीयमिदं जन्म दुःखान्तरमनेकशः ॥ ३७ ॥
किं प्राप्तं जीवलोकेऽस्मिन्वरं मरणमेव मे ।
एवं चिन्तातुरा यावत्तावन्निद्रामवाप सा ॥ ३८ ॥
तस्मिन्क्षणेऽथ संप्राप्तः सोऽपि पूर्वावलोकितः ।

दृष्ट्वा प्रियं तथा रूपयुतं सर्वातिसुन्दरम् ।
उत्थाय शयनात्तत्र पादौ जग्राह भामिनी ॥ ३९ ॥
सान्तपूर्वं विधायैव प्रोवाच मधुराक्षरम् ।
प्रेक्षन्ती दीननयना निःश्वसन्ती मुहुर्मुहुः ॥ ४० ॥
कथं नाथ न जानासि मद्वृत्तं तद्वियोगजम् ।
न सुखं नैव निद्रा मे कथं नास्ति कृपा तव ॥ ४१ ॥
सत्यं वदाधुना नाथ कुत्र वासोऽस्ति ते पुनः ।
तथा किंनामधेयोऽसि रक्ष मां शरणागताम् ॥ ४२ ॥
श्रुत्वेति प्रहसन्प्राह कृत्वा भ्रुकुटिमन्मुखम् ।
शृणुष्वा(स्वा)वहिता सुभ्रु सत्यं ते कथयाम्यहम् ॥ ४३ ॥
प्रथितो हि नृलोकेऽस्मिन्देशो मे मेस्रसंज्ञितः ।
अजेजमेस्रनामाहं तथैव वरवर्णिनि ॥ ४४ ॥
इत्युक्त्वान्तर्हितस्तत्र तावत्सापि नृपात्मजा ।
प्रबुद्धा हर्षसंयुक्ता प्राप्य जीवं यथा मृतः ॥ ४५ ॥
शास्त्राम्बुधिं समालोड्य प्राप्तनानार्थसंचयः ।
सुधियः कथयन्त्येवं चरितं परमाद्भुतम् ॥ ४६ ॥
पूर्वमेको महानासीदीश्वरो मा यथा पुनः ।
ससर्जेऽदमनामानं सर्गार्थं पुरुषं परम् ॥ ४७ ॥
सदा लब्धगतिस्तेपे तपः परमदारुणम् ।
ततस्तुष्टो ददौ तस्मै दर्शनं भगवान्पुनः ॥ ४८ ॥
विधाय दर्शनं तस्य मायाजवनिकान्तरे ।
स्थितास्या लोकयामास ततोऽसौ तत्समीपगान् ॥ ४९ ॥
पैगाम्बरांस्ततः साध्यनामधेयानवस्थितान् ।
एकत्र ध्वजछत्रौघसहिताञ्जपतः परम् ॥ ५० ॥
सिद्धाभिधानानौलेयानेकत्र समवस्थितान् ।
अन्यत्रोत्पादिताञ्जीवान्कोटिकोटिसहस्रशः ॥ ५१ ॥

विलोकयन्सभां रम्या विस्मयोत्फुल्ललोचनः ।
जीवात्मानं ददर्शैकं योऽसौ भाग्यं नरोत्तमम् ॥ ९२ ॥
स विलोक्यैव तं कान्तं विचारनिरतोऽभवत् ।
कोऽयं कमलपत्राक्षः कस्य वा याति पुत्रताम् ॥ ९३ ॥
एवं तत्राद्भुते जाते विमर्शाकुलमानसे ।
अकस्मादुदभूद्वाणी सोऽप्येतामशृणोत्ततः ॥ ९४ ॥
मा चिन्तां कुरु बालेयं त्वत्सृष्टौ जायते स्वयम् ।
जातेनानेन ते नाम प्रसिद्धिमुपयास्यति ॥ ९५ ॥
याकोभिकाभिधानस्य गृहेऽयं संभविष्यति ।
जनयन्नयनानन्दं लोकानां लोकसंपदा ॥ ९६ ॥
तद्वंशोद्यानमध्येऽयं सिंहोर्जितपराक्रमः ।
बलेन महता शान्ति दुष्टसत्त्वान्विनेष्यति ॥ ९७ ॥
खलेलोलाहकस्यायं मनःसागरकौस्तुभः ।
नास्य भानुः प्रतापेन कान्त्या तुल्यो न चन्द्रमाः ॥ ९८ ॥
यदोत्क्षपति प्रावारं स्कन्धदेशान्मुहुर्मुहुः ।
तदायं जीवलोकस्य मनो हर्तुं क्षमो भवेत् ॥ ९९ ॥
न हि वक्तुं भवेत्कश्चिद्रूपमस्य मनोहरम् ।
तेनैव प्रथितो नूनं जीवलोके भविष्यति ॥ ६० ॥
नित्यं दिव्याम्बरवृतः सदा मौलिविभूषितः ।
भालभानुर्भवेदस्य दोषरात्रिविवर्जितः ॥ ६१ ॥
प्रासादचन्द्रिकैतस्य नभोमण्डलमास्थिता ।
उन्नता प्रथिता लोके सर्वरत्नविभूषिता ॥ ६२ ॥
मेस्नाभिधानदेशेऽयं राजराजशिरोमणिः ।
अजेजमेस्ननामापि ख्यातः प्रियतया भवेत् ॥ ६३ ॥
परमत्यद्भुतं रूपं दृष्ट्वा भाग्योदयं तथा ।
भ्रातरोऽस्य भविष्यन्ति रत्नान्वेषणतत्पराः ॥ ६४ ॥

दत्तमेतन्मया किं तु भवांल्लोकपतिः कृतः ।
देह्यस्मै किं प्रदातासि संतुष्टं यदि ते मनः ॥ ६५ ॥
इति श्रुत्वाद्भुतं वाक्यं बद्धाञ्जलिपुटं ततः ।
उवाच हर्षसंयुक्तः प्रश्रयानतमस्तकः ॥ ६६ ॥
यद्रूपं जीवलोकेऽस्मिन्मया दत्तं तदन्तरात् ।
तद्वयं द्वयमेतस्मै लोकायैकं तवाग्रतः ॥ ६७ ॥
नैतद्रूपेण सदृशः कश्चिद्भवितुमर्हति ।
अनेनापस्य(?)मन्येषां नास्य भूयात्परैः सह ॥ ६८ ॥
इति संभाषणं कृत्वा सोऽपि संतुष्टमानसः ।
समालिङ्ग्य पुरो गत्वा चुचुम्ब वदनैः शनैः ॥ ६९ ॥
दत्त्वाशिषं ततोऽमुष्मै समायाता महीतलम् ।
स विसृष्टो हि सर्गार्थे ततस्तामकरोच्छुभम् ॥ ७० ॥
एतस्मिन्नेव संसारे सर्वे श्रीसहितं जनाः ।
आसाद्य समयं नाम डिण्डिमं ताडयन्ति च ॥ ७१ ॥
इमं मायामयं सर्वे कथयन्ति विपश्चितः ।
भास्यं दर्शयन्रूपैरनेकैस्तां मुहुर्मुहुः ॥ ७२ ॥
दिनं त्वनियमेनैतां कदाचिद्दर्शयिष्यति ।
जन्मादिवैपरीत्येन कदाचिद्वीर्यवानयम् ॥ ७३ ॥
कृत्वा सर्गं गते तस्मिन्नदमाख्ये नृलोकतः ।
तद्वंशजोऽथ लोकेऽस्मिञ्शेषो नामाभवत्प्रभुः ॥ ७४ ॥
विधायाद्भुतमैश्वर्यं तस्मिन्याते दिवं पुनः ।
पद्रोमाख्योऽस्य तनयस्ततः सर्गमपालयत् ॥ ७५ ॥
समायातो यदैवासौ मायां बुद्धितरंगताम् ।
खलेलोलाहकाख्ये·········न्मा भूपतिस्तदा ॥ ७६ ॥
समारूढे दिवं तस्मिन्धर्मात्मनि महीपतौ ।
एसहाकाभिधानोऽभूद्भूपस्तद्वंशजः पुनः ॥ ७७ ॥

तस्मिन्नपि महासत्त्वे गते नामावशेषताम् ।
जीवलोकेऽभवद्राजा याकोभाख्यो महामतिः ॥ ७८ ॥
कनानामोपसंस्थो(?)ऽसौ महाबलपराक्रमः ।
मेस्त्रइयामारिविषयान्बुभुजे भूपतिस्तदा ॥ ७९ ॥
गजवाजिसहस्रौघैर्वृतो भूपशिरोमणिः ।
अद्भुतां राज्यलीलां तां वशयञ्छुशुभे नृपः ॥ ८० ॥
रूपशीलगुणौदार्यसहिते शुद्धवंशजे ।
महिष्यौ नृपतेरास्तां धर्मकर्मक्षमे शुभे ॥ ८१ ॥
अवापैका तयोः पुत्रानेकादश महाबलान् ।
अन्यैकं गर्भरत्नं ते योसोपाख्यमजीजनत् ॥ ८२ ॥
जातेषु तनयेष्वेवं याकोभाख्यो महीपतिः ।
येसोभनामधेयेन पुत्रेणावाप सत्सुखम् ॥ ८३ ॥
तमेवामे(?)समादाय बहिरन्तस्तथानिशम् ।
विचरन्भूपतिस्तत्र परां प्रीतिमवाप सः ॥ ८४ ॥
तेनैव बालकेनास्य प्रीतिः समभवत्तथा ।
यथामन्यत भूपोऽसावनुत्पन्नानिवापरान् ॥ ८५ ॥
पूर्वं संयोज्य मैत्र्यैवं मायया हर्षितावुभौ ।
विनियोक्ष्यति तौ पश्चात्कथं धाता विरोधकृत् ॥ ८६ ॥
अहो पण्डितमन्येन दुर्विदग्धेन वेधसा ।
अपराधं विना तस्य कृता ह्यपकृतिः कथम् ॥ ८७ ॥
तज्जन्माभूत्सुखं तद्वत्सा प्रीतिर्जनकेन च ।
ऊनद्विवार्षिकस्यास्य जननी संस्थिता तदा ॥ ८८ ॥
विहिते वेधसा कार्ये याकोभाख्यो महीपतिः ।
जगामातुरतां तत्र बालकेनामुना सह ॥ ८९ ॥
स्तन्यं नैवापरा माता ददौ तस्मै नृपाक्षिता(?) ।
सपत्नीतनयं मत्वा न दया दयिताहृदि ॥ ९० ॥

विमृश्य बहुशो राजा भगिन्यै तं ददौ ततः ।
पालयामास स्नेहेन सानपत्यापि भामिनी ॥ ९१ ॥
दिने दिने वर्धमानो, जननीसौख्यवर्जितः ।
तां प्राप्य मातरं पितृष्वसारं मुदमाप सः ॥ ९२ ॥
असमञ्जसवाक्येन गत्वा स्खलितया तया ।
प्रीतिं ततान बालोऽस्याः प्रणिपातादिकर्मणा ॥ ९३ ॥
सापि तत्स्नेहपाशेन बद्धाभूच्चारुलोचना ।
क्षणमेकं विना तेन स्थातुं नैवाभवत्क्षमा ॥ ९४ ॥
रजन्यां त्यक्तनिद्रापि लालयन्ती सुतं ततः ।
न चकार दिवा किंचित्कर्म तद्दर्शनं विना ॥ ९५ ॥
जनकोऽपि तदुत्कण्ठासहितोऽहर्निशं सदा ।
नामन्यत सुखं किंचित्तनयैस्तैर्मनोरमैः ॥ ९६ ॥
तच्चिन्तया समाक्रान्तो बाष्पसंरुद्धलोचनः ।
अविज्ञातस्वदेहोऽपि मुञ्चन्च्छ्वासान्मुहुर्मुहुः ॥ ९७ ॥
एकदागत्य भूपालो भगिन्यौ बहु रक्षयन् ।
अङ्के कृत्वा सुखं सान्त्वपूर्वमूचे वदंस्ततः ॥ ९८ ॥
योसोभवित्प्रयोगार्तिविधुरं मां सुखान्वितम् ।
कर्तुं क्षमा त्वमेवैका नोपायो दृश्यते परः ॥ ९९ ॥
यथायं बालको नूनं पालितो यत्नसंचयैः ।
तथा मामपि कल्याणि रक्ष तच्चिन्तयातुरम् ॥ १०० ॥
अधुना देहि तां मह्यं तनयोऽस्तु तदर्शनः ।
नाहं सोढुं समर्थोऽस्मि तद्वियोगव्यथां पुनः ॥ १०१ ॥
इति भ्रातुर्वचः श्रुत्वा दोलारूढेव साभवत् ।
प्रकटं स्नेहसंयुक्तमन्तःक्रोधयुतं जगौ ॥ १०२ ॥
नाधुना नीयतां भ्रातः सुतोऽयं सुमनोरमः ।
पूज्योऽसि मे सदैवैकस्त्वदधीनं हि जीवितम् ॥ १०३ ॥

एवमुक्तवती वाक्यं बुद्ध्युपायमथाकरोत्।
यथा नैवाप तनयं व्यलीकं नापि भूपतिः ॥ १०४ ॥
तस्मिन्पैतामही नासीत्किंचिद्वासः समर्पितम्।
यद्बद्ध्वा लोभनिर्मुक्तं तपोलीनं मनो भवेत्॥ १०५ ॥
गुप्तं निधाय तद्वासस्तत्पदाभ्यन्तरे गतः।
समानीय पुरस्तस्मै तनयं स्वं समर्पयत्॥ १०६ ॥
तं गृहीत्वैव तनयं हर्षेणोत्फुल्ललोचनः।
तद्गृहान्निर्गतो यावच्छुश्रावेमं ध्वनिं नृपः॥ १०७ ॥
हा कष्टं किमिदं जातं केनाप्युपहृतं शुभम्।
वासस्तद्दुर्लभं बद्ध्वा यत्पापैर्न विलिप्यते॥ १०८ ॥
श्रुत्वा प्रत्यागतः सोऽपि तनयेन सहापरे।
एकत्र मिलिता भीत्या शङ्कमानः परस्परम्॥ १०९ ॥
पृथक्पृथग्विधायैवं शपथं व्याकुलाशयः।
स्वयं तदाकरोदिच्छा तद्वस्त्रान्वेषणं तदा॥ ११० ॥
निर्मुच्य सर्ववासांसि न ददर्शाथ कुत्रचित्।
पश्चादानीय तं बालं तथैवान्वेषणं व्यधात्॥ १११ ॥
प्राप्य तत्रोत्तमं वासस्तद्वस्त्रान्तरसंस्थितम्।
उवाच बालकेनैतद्बालबुद्ध्यापहारितम्॥ ११२ ॥
प्राप्तं मयैतत्सद्वासः स्तेयकृद्बध्यतामयम्।
यथा नैवाचरेद्भूयः कर्म वै बुद्धिमोहितः॥ ११३ ॥
तस्मिन्देशे प्रतिज्ञेयं यो यस्य स्तेयमाचरेत्।
चौरे गृहीते दासत्वं स हि तस्याश्नुते ततः॥ ११४ ॥
इति बुद्ध्वैव सा बालमनिच्छास्तेयकारिणम्।
चकार मायया दासं नृपः प्रत्यागतस्ततः॥ ११५ ॥
एवं कृतापि सा तन्वी चरिते परमाद्भुते।
उवास हर्षिता नित्यं बालकेनामुना सह॥ ११६ ॥

कदाचिदथ तत्प्राप्तिहर्षिता विधिमायया ।
ज्वरदाहान्विता जाता याता नामावशेषताम् ॥ ११७ ॥
श्रुत्वा तदद्भुतं भ्राता तस्या बालमृगीदृशः ।
पुनरागत्य जग्राह तनयं स्वं मनोरमम् ॥ ११८ ॥
लब्ध्वा तं बालकं कान्तं सर्वलक्षणसंयुतम् ।
पुनर्जातमिवात्मानं मन्यमानोऽन्वमोदत ॥ ११९ ॥
यद्दुर्लभतरं लोके वस्तु प्रीतिकरं सदा ।
तातेन सहसा प्राप्तं शरं तद्दर्शनाद्भुवि ॥ १२० ॥
यत्किंचित्सुखदं कर्म लोकेऽस्मिन्प्रथितं भवेत् ।
प्रियत्वात्सर्वलोकस्य रूपेणाप्रतिमेन च ।
अजेजमेस्त्रनामायं लोके सत्यतया भवेत् ॥ १२१ ॥
अपरोऽप्यभवत्तत्र नाम्ना नैव गुणेन च ।
यशसा प्रथितो लोके मन्त्री कस्यापि भूपतेः ॥ १२२ ॥
श्रुतं स्वप्ने तथाप्येवं सत्यं नाधिगतं तया ।
स दिवाजेणमेस्त्रस्य तस्य चैक्यममन्यत ॥ १२३ ॥
अत एव वदन्त्येके स्वप्नो मायाविनिर्मितः ।
यथैवानेन बालेयं मोहिता नृपकन्यका ॥ १२४ ॥
एवं गतेऽपि चैतस्या दोषः कश्चिन्न विद्यते ।
असत्यमपि रागान्धः सत्यं जानाति रागतः ॥ १२५ ॥
श्रुत्वा प्रियतरं वाक्यं कान्तवक्त्रोद्भवं तथा ।
पुनर्जातमिवात्मानममन्यत नृपात्मजा ॥ १२६ ॥

इति यवनभाषापारंगमपण्डितश्रीवरकृते कथाकौतुके चतुर्थं कौतुकम् ।

---

पञ्चमं कौतुकम् ।

प्रातरुत्थाय सा बाला प्राप्तसर्वमनोरथा ।
विहायोन्मत्तभावं तं जातसंज्ञाभवत्तदा ॥ १ ॥

प्राप्तं सर्वं तदालापा यत्नेनापहृतं बलात् ।
तनौ बलं सुखं जीवे परमात्मनि संस्मृतिः ॥ २ ॥
सुप्तोन्मत्तेव सा बाला यदि तेन हृताशया ।
तदा भाषणमाश्चर्यं श्रुत्वा स्मृतिमथोत्थिता ॥ ३ ॥
कृतं स्वप्ने यदा देशनामनिर्णयमद्भुतम् ।
तदैव प्राप्तमनया चैतन्यादि मृगीदृशा ॥ ४ ॥
समाहूयैव तं दासीगणमाह सुमध्यमा ।
मैवं चिन्तां मदुन्मत्तभावजां यूयता(?)धुना ॥ ५ ॥
गत्वा त्वरितमद्यैव पितरं कथयन्तु मे ।
तन्मनो दुःखसंपूर्णं रचयन्तु सुखान्वितम् ॥ ६ ॥
चैतन्यशरमद्येयं प्राप्ता पूर्ववदेव सा ।
बुद्धिहंसावलिस्तद्वन्नूनं मानसमागता ॥ ७ ॥
निर्मोचयतु मर्यादबन्धनं भूपतिः स्वयम् ।
तत्करस्पर्शतो नूनं सुखमाप्नोति मानसम् ॥ ८ ॥
दुर्वर्णरचितं तूर्णमपाकुरुत बन्धनम् ।
उन्मत्तभावजं नूनं न भयं मेऽस्ति सांप्रतम् ॥ ९ ॥
श्रुत्वैतद्वचनं भूपो दासीवदननिर्गतम् ।
प्रहर्षोत्फुल्लनयनस्तन्मन्दिरमुपाययौ ॥ १० ॥
दृष्ट्वा चैतन्यसंयुक्तां त्यक्तरागां मुदान्वितः ।
समानीयान्तिके बालां पुरस्तात्संन्यवेशयत् ॥ ११ ॥
नागपाशोपमं तद्वद्बन्धनं कृतवान्पृथक् ।
स्नेहमन्त्रेण भूपाल तत्पादनिहितः स्वयम् ॥ १२ ॥
तावद्दासीगणः सर्वैर्ववन्दे चरणद्वयम् ।
श्रुत्वा पादतले पादपीठं सौवर्णमुत्तमम् ॥ १३ ॥
यदैश्वर्यमभूत्पूर्वं पुनस्तत्सर्वमर्पितम् ।
सख्यस्तं मस्तके मौलिं स्थापयामासुरद्भुतम् ॥ १४ ॥

सर्वाः सुमध्यमास्तत्र समायाता मुदान्विताः ।
तदा तत्सुखसौभाग्यदीपे याताः पतङ्गताम् ॥ १५ ॥
तासां सवयसां मध्ये भूपालतनया ततः ।
निर्धूतकोकिलालापं वाग्विलासमथाकरोत् ॥ १६ ॥
सख्यः शृणुत नो जाने मानसं किं सकौतुकम् ।
अव्य(?)द्विहाय सकलं कर्तुं देशनिरूपिणम् ॥ १७ ॥
रोमश्यामादिकान्देशान्गणयामास तत्परा ।
माययोन्मत्तभावे स्यादेवं संदर्शितानपि ॥ १८ ॥
कृत्वा निरूपणं तेषां यावन्मेस्रमुपागता ।
नेत्राम्बुभिरसिञ्चत्सा मेघपङ्क्तिरिवोर्वरम्[1] ॥ १९ ॥
मेस्रनाम गृहीत्वापि मूर्छितेवापतद्भुवि ।
तत्रत्याजेजमेस्राख्यविषमीगातुरासती ॥ २० ॥
तत्प्रेमवशिता बाला चक्रे देशनिरूपणम् ।
मेस्रमेस्रेति कथनात्परं सुखमविन्दत ॥ २१ ॥
अभूदहर्निशं कार्यमेतदेव मृगीदृशः ।
ये च तन्नामतद्देशवर्णनं क्रियते परम् ॥ २२ ॥
सा वाणी सुखदा नित्यं तद्यशो गीयते मया ।
नैवात्युक्तकथालापमूकेवावस्थिता तदा ॥ २३ ॥
तद्ध्यानं मानसं वाचि कीर्तनं श्रवणं श्रुतौ ।
तदीक्षणं च सर्वत्र तन्मयीवाभवत्तदा ॥ २४ ॥
अभूद्यदपि सा बाला रागिणोन्मत्तरूपिणी ।
तथापि रूपकीर्त्यास्याः पूर्णं भूमण्डलं तथा ॥ २५ ॥
यत्र यत्रापि तद्रूपकथा प्रादुरभूत्परा ।
शान्तात्मानोऽपि तां श्रुत्वा दोलारूढा इवाभवन् ॥ २६ ॥
राजानो राजपुत्राश्च तदास्यासक्तमानसाः ।
तत्सभासु च तद्रूपलावण्याख्यानमुत्तमम् ॥ २७ ॥

---

१. 'राम्' इति भवेत्.

तदा सर्वगुणोपेताः सर्वे मानधनोर्जिताः ।
गृहीतकामामुर्वीं तामासन्नाकल्पशालिनः ॥ २८ ॥
*सापि रूपगुणोपेता यौवनोत्तमशालिनी ।*
विहायोन्मत्तभावं तं यदा वृद्धिमुपागता ॥ २९ ॥
तदद्भुता नरेन्द्राणां नानादिग्भ्यः समागताः ।
रोमश्याममहीपालकम्पा नेपथ्यभूषिताः ॥ ३० ॥
दशानां भूमिपालानां तावन्त एव सेवकाः ।
संमाप्ता नगरे तस्य तेमोसधर्ममहात्मनः ॥ ३१ ॥
तेषामेकोऽथ संप्राप्तो गृहीत्वा परमाद्भुतम् ।
कोसलिकामेकद्वीपसमुत्पन्नार्थसंयुताम् ॥ ३२ ॥
अपरेऽपि तथैवैकसिलैमानस्य मुद्रिकाम् ।
आदाय समनुप्राप्ते भूपैश्वर्ये निदर्शनम् ॥ ३३ ॥
गृहीत्वान्येऽपि संप्राप्ता एकैकं वस्तु दुर्लभम् ।
यद्दृष्ट्वा स हि तां मह्यं मह्यमेव प्रदास्यति ॥ ३४ ॥
यत्र कुत्रापि सा बाला वदनं वर्तयिष्यति ।
विषयेषु स हि ख्यातो देशो देशशिरोमणिः ॥ ३५ ॥
यस्मिन्भूपे मनःसम्यक्त्वाभिलाषं मृगीदृशः ।
स हि ग्रामादिकानाथो देशाधिपतिरुच्यते ॥ ३६ ॥
यस्मिन्देशे मनः स्थातुं नाभिलाषं मृगीदृशः ।
स हि ग्रामटिकातुल्यो देशाधिपतिरुच्यते ॥ ३७ ॥
भूपवद्यदि संदत्ते श्यामाख्ये नगरे सुखम् ।
तदानिशं प्रकुर्वन्ति तत्रत्यास्तु सदानिशम् ॥ ३८ ॥
यदीयं रोमनामानं वाचा संशृणुते परम् ।
जङ्गाख्यं नगरं यावद्दासस्तत्पुरवासिनः ॥ ३९ ॥
इत्थं समागताः प्रेष्या भूपालानां विशेषतः ।
ऐश्वर्यं कथयामासुस्तदर्थं प्रेषितास्तदा ॥ ४० ॥

---

१. 'स म' स्यात्.

एवं वृत्ते समावृत्ते वार्ता तावच्छ्रुता तया।
व्याकुलं मानसं तस्यास्तदागमनचिन्तया॥ ४१॥
पप्रच्छानन्तरं बाला दासदासीगणं तदा।
अजेजमेस्नदूतोऽपि प्राप्तो वा नेति कथ्यताम्॥ ४२॥
तच्चिन्ता मानसे नित्यं तद्रागाकुलिताप्यहम्।
मनो धावति मे तत्र किं फलं तं विना भवेत्॥ ४३॥
यदि मेस्नगतो वायुर्वाति रेणुं किरन्मुहुः।
मन्ये मृगमदं नूनं मुञ्चन्नेव प्रयात्ययम्॥ ४४॥
एवं चिन्ताकुला यावद्भूपान्ततनया भवेत्।
जनकेन समाहूता तावत्सा चारुलोचना॥ ४५॥
शृणु कल्याणि मद्वाक्यं सर्वदुःखविवर्जितम्।
सर्वलक्षणसंपूर्णे नयनानन्दकारिणि॥ ४६॥
स्तम्भभूता नृलोकेऽस्मिन्ये भूता यशसान्विताः।
येऽपि दुग्धविनिर्मुक्ता नित्यं मुकुटधारिणः॥ ४७॥
त्वच्चिन्तासहिता तेऽद्य त्वदाहितमनोधियः।
त्वत्प्रेमबीजं नियतं रक्षन्तः क्षेत्रसंनिधौ॥ ४८॥
त्वदर्थं प्रेषिताः प्रेष्या भूपालाः सुमहात्मभिः।
कोसलिकां समादाय मत्सकाशमुपागताः॥ ४९॥
शृणु वक्ष्यामि भूपानां वृत्तं सेवकवर्णितम्।
तेषु कोऽपि भवेत्सुभ्रु प्रियस्ते तं वदस्व मे॥ ५०॥
यस्मिन्देशे नृपेणापि साभिलाषं मनस्तव।
तत्क्षणात्तं करिष्यामि वशगं चारुलोचनम्॥ ५१॥
एवं वदति भूपाले तूष्णीमेव नृपात्मजा।
आसीत्तच्छ्रवणं पूर्वदृष्टं का नु परस्परम्॥ ५२॥
वरं तच्छ्रवणं भूयाच्छब्दयुक्तं विशेषतः।
कृत्वावधानं सततं परं मित्रकथाश्रुतौ॥ ५३॥

दूतवृत्तं तु तत्सर्वं भूपालैश्वर्यसंयुतम् ।
कथयित्वाजेजमेस्तनाम नेतुं कथंचन ॥ ५४ ॥
न श्रुतं मे प्रवृत्तान्तं कश्चिन्नाप्यागतस्ततः ।
निराशैवोत्थिता बाला त्यक्त्वा जनकदर्शनम् ॥ ५५ ॥
बाष्पमुक्तावलिं पक्ष्मवज्ररन्ध्रेन सा पुनः ।
भिन्दन्निवैवमात्मानमनिन्दन्नृपकन्यकाः ॥ ५६ ॥
परं मे मरणं श्रेष्ठं तथा धिग्जन्म सांप्रतम् ।
न जाने समये कस्मिञ्जाताहं निन्दिता परम् ॥ ५७ ॥
मेघोऽम्बुधिविनिर्यातो मुञ्चन्नम्भः सुधामयम् ।
सत्यं मां तृषितां सत्वा(?)विनाग्निं नैव मुञ्चति ॥ ५८ ॥
अहितं विहितं किं वा न जाने वेधसा सह ।
कथं शोकाम्बुधौ बाला निमज्जयति मां मुहुः ॥ ५९ ॥
मार्गे न दीयते मह्यं यदि कान्तान्तिके त्वया ।
कथं दूरीकरोष्येवं ततो मां मुहुरातुराम् ॥ ६० ॥
यदि मे मृत्युकामोऽसि मृतेवाहं तथाधुना ।
अविचारेण ते जीवं पश्य भूयो ययाम्यहम् ॥ ६१ ॥
यदि पारयितुं कामो मानसे तव मां मुहुः ।
स्थापितं तृणवद्गात्रं वृथा गिरितले मम ॥ ६२ ॥
त्वया विचारबाणेन कृतं मे निचितं मनः ।
युक्तमेतत्प्रकुरुषे मया भेषजरोपणम् ॥ ६३ ॥
तुष्टाहं यदि वा चिन्तापराहं तव किं सुखम् ।
जीविता मृतकल्पा वा वद किं ते फलं ततः ॥ ६४ ॥
काहं वराका वपुषा मम किं रक्षितेन ते ।
यशोऽथ वा मृतेनापि किं वा निन्दा भविष्यति ॥ ६५ ॥
सुकुमारा' सुरूपाश्च नराः शतसहस्रशः ।
मृत्युवह्निमुपादाय नीता भस्मावशेषताम् ॥ ६६ ॥




एवमाक्रन्दनेनैव सकलं दिवसं तदा।
कृतेन कलिकैवाभूदुक्ता पूर्णतनुस्तथा ॥ ६७॥
असिञ्चद्धरणीं बाष्पधाराभिस्तत्र भामिनी।
बिभेद सहसा रोपपाषाणेन समस्तकम् ॥ ६८॥
दृष्ट्वाद्भुतां तु तां प्रीतिं तस्या भूमिपतिस्तदा।
अजेजमेस्रेण समं क्षणमेकमचिन्तयत् ॥ ६९॥
इयं मनोरमा बाला प्रथिता लोकमण्डले।
अजेजमेस्लब्धापि स्वयं किं क्रियतेऽधुना ॥ ७०॥
दत्त्वा पृथक्पृथक्कुत्र द्विगुणं भूपतिस्तदा।
कोसलिकानरेन्द्राणां प्रेष्यांस्तान्विससर्ज सः ॥ ७१॥
तामादायैव सहसा पूजितास्तेन भूभुजा।
प्रत्याययुः सुसंतुष्टाः कृत्वा सर्वे सदाशिषम् ॥ ७२॥

इति यवनभाषापारंगमेन पण्डितश्रीवरेण विरचिते कथाकौतुके पञ्चमं कौतुकम्।

---

## षष्ठं कौतुकम्।

बभूव सा तदा कान्तरागाङ्काङ्कितमानसा।
तन्नामग्रहणाद्बाला तद्वैगुण्यमथादधे ॥ १॥
दिवसस्य प्रकाशस्य ज्योतिः संदृश्यते क्वचित्।
निरालोकं दिनं तस्यान्नैराश्यं यत्र जायते ॥ २॥
यदा दृष्टं मनो राज्ञा तस्या मेस्रार्थमागतम्।
तदा तत्प्राप्तये भूप उपायं समचिन्तयत् ॥ ३॥
कोऽप्यस्ति तादृशो लोके गत्वा मेस्रमितस्तु यः।
भवेत्प्रीतिकरो बुध्या जोलेखाजेजमेस्रयोः ॥ ४॥
गृहीत्वा मम संदेशं याति प्रेत्यानयिष्यति।
तथैवाजेजमेस्रेण मैत्रीं संजनयिष्यति ॥ ५॥
एकोऽतिनिपुणो दृष्टो राज्ञा निकटवर्तिनाम्।
स्तुवन्तः सततं यस्य बुद्धिं बुद्धिबलोर्जिताः ॥ ६॥

दत्तोपायनरत्नानि शतशोऽस्य करे नृपः ।
पुत्रमेकं च तद्वृत्तसहितं विससर्ज तम् ॥ ७ ॥
प्राह भूमिपतिस्तावत्संदेशं स्वयमग्रतः ।
त्वयाप्यजेजमेत्रस्य कथनीयमिदं वचः ॥ ८ ॥
तयास्त्यैश्वर्यमतुलं प्रत्यहं प्रथितं भुवि ।
लोके प्रियतया ख्यातं नाम सैवाधिका भवेत् ॥ ९ ॥
परं शशिमुखे श्यामाः कन्याः सन्ति महीभुजः ।
सकलङ्को मृगाङ्कोऽयं जातो यद्रूपसाम्यतः ॥ १० ॥
यां स्वयंविहितां धाता जातोत्कण्ठो निरीक्षितुम् ।
ताराच्छलेन नेत्राणां शतान्याविष्करोत्यतः ॥ ११ ॥
एकेनापीक्षितं जातु यन्मुखं दर्पणं विना ।
यस्या निर्मलतासाम्यं न कुर्वन्ति हिमादयः ॥ १२ ॥
पिधाय वाससा वक्त्रं पश्यत्येव सुधाकरम् ।
करावलिर्यथा नास्य जायते दाहकारिणी ॥ १३ ॥
मुखं स्पर्शयितुं शक्तो न वायुरलकान्विना ।
स्वात्मीयामपि यश्छायां विलोकयति नापराम् ॥ १४ ॥
संपूर्णे सुमुखी बाला नित्यं हर्म्यस्थितापि या ।
न करोत्यपरं कर्म विना पश्चालिदेवताम् ॥ १५ ॥
यस्याः सौगन्ध्यसाम्यार्थं सुमनांसि जितान्यपि ।
बद्ध्वात्मानं लतास्वेव कुर्वन्ति तप उत्तमम् ॥ १६ ॥
वल्गतेव कदाचित्सा क्वणत्कनकनूपुरा ।
अन्तरेव बहिःशब्दो जायते क्षुभ्यतां नृणाम् ॥ १७ ॥
प्रवेशं कुरुते तत्र वेशकर्मणि कोविदाः ।
सौरन्ध्री नापरः कश्चित्कदाचिज्जनकोऽपि वा ॥ १८ ॥
एवंविधापि भूपाल राजेन्द्रतनया परा ।
देवकन्येव सा भाति रूपशीलगुणान्विता ॥ १९ ॥

सर्वे भूपतयस्तस्यां समाहितमनोधियः।
त्यक्त्वान्यकरणीयानि तच्चिन्तायां परायणाः॥ २०॥
रोमकाधिपतेर्दूतास्तथा श्यामस्य भूपतेः।
तदर्थं भूप संप्राप्ता गृहीत्वोपायनं महत्॥ २१॥
केनापि नृपवर्येण सह सा सहसाकरोत्।
नाङ्गीकारं नृपसुता प्रार्थितापि नरोत्तमैः॥ २२॥
न मनो रोमके लग्नं तथा राजसुता नृप।
श्यामाख्यं गणयामास नगरं कृपणं यथा॥ २३॥
नेत्रद्वन्द्वं परं त्वस्या मेस्रार्थं जलदोपमम्।
तन्नाम संगृहीत्वेव मृतकल्पेव जायते॥ २४॥
न जाने साभिलाषा किं सा तु मेस्रं सुमध्यमा।
त्यक्त्वान्यत्सकलं सौख्यं तद्वद्भूतं किमीदृशम्॥ २५॥
सत्यं तदम्भसा किं वा तद्भुवा रचितावला।
धात्रा जीवनमस्त्येवं लिखित्वात्र समर्पितम्॥ २६॥
यदि त्वन्मानसे राजन्प्रिया सा तनुमध्यमा।
इतो गत्वानयिष्यामि क्षणेनैतां तवान्तिकम्॥ २७॥
यदि नैषा सुरूपा ते प्रिया भवितुमर्हति।
त्वद्गृहे राजतनया दासीकर्म करोत्ययम्॥ २८॥
तच्छ्रुत्वाजेजमेस्रोऽपि संदेशं परमाद्भुतम्।
हर्षेण महता युक्ता उच्चैरकरोच्छिरः॥ २९॥
विधाय प्रणतिं प्राह क्वाहं क्व स महीपतिः।
तत्संदेशोद्भवां चिन्तां धारयामि कथं हृदि॥ ३०॥
तथापि तव राजासावुत्थापयति भूमितः।
शोभते यद्यहं साम्यं करोमि विधिना सह॥ ३१॥
ततश्चेत्तु नरेन्द्रो मां यच्चदग्रे तृणोपमम्।
स दृष्ट्वाश्रदया वृष्ट्या पुनः संजीवयिष्यति॥ ३२॥

यदि जिह्वासहस्रं मे सबले सुखमध्यगम् ।
नाहं तदा स्तुतिं कर्तुं शक्तो भूमिपतिस्तव ॥ ३३ ॥
भाग्यं फलितमेतन्मे सफलं धर्मकर्म च ।
संभावितो नरेन्द्रेण कार्येऽस्मिन्नहमर्पयत् ॥ ३४ ॥
गच्छामि शिरसा तत्र रचयामि पुनः पुनः ।
प्रणतिं किं तु शृण्वेकं कारणमद्य मे सखे ॥ ३५ ॥
पराधीनोऽस्मि सेवायां सद्रोहं स्वामिना तथा ।
यथा न क्षणमेवैकं गन्तुं कुत्रापि शक्तिमान् ॥ ३६ ॥
क्षणमेकं यदा मया स्थीयते स्वेच्छया क्वचित् ।
न जाने किं यदेवायं मन्यते प्रकृतिं मम ॥ ३७ ॥
क्षम्यतामपराधोऽयं मम स्नेहात्प्रचेतसा ।
नृपेण संशयो वापि न कर्तव्यः कथंचन ॥ ३८ ॥
यदि वक्ष्यति भूपालो विवाहार्थं मयाधुना ।
प्रहीयतेऽद्य सौवर्णकलीरथ शतद्वयम् ॥ ३९ ॥
दासदासीगणाश्चैव कञ्चुकोष्णीषधारिणः ।
मागधा वन्दिनश्चैव बालवृद्धपुरःसराः ॥ ४० ॥
महाजना धर्मपराः सर्वे मत्पुरवासिनः ।
समानयन्तु तां कान्तां निर्गच्छन्तु ममाज्ञया ॥ ४१ ॥
परं तु मोच्यतां तत्र मदर्थं वचनं सखे ।
न तं मुञ्चति भूपालः क्षम्यता मम सत्तम ॥ ४२ ॥
इति चिन्तातुरं दृष्ट्वा प्राह दूतो महामतिः ।
*विधाय विहितं पूर्वं सान्त्वपूर्वमिदं वचः ॥ ४३ ॥*
अहो राजेन्द्र ते लक्ष्मीः प्रथिता लोकमण्डले ।
धर्मार्थैकफला नूनं वर्धमाना भवत्वियम् ॥ ४४ ॥
तथापि मम भूपालः ख्यातस्त्रिभुवनेऽप्ययम् ।
तदग्रे श्रीमतां लक्ष्मीं को वक्तुं शक्तिमान्भवेत् ॥ ४५ ॥

गृहे तु नृपवृद्धस्य दासदासीगणा मुहुः।
शक्तो गणयितुं को वा यथा तारा नभस्तले ॥ ४६ ॥
यदायाति सभामध्ये रत्नान्युन्मालिकापरः।
ददाति गणितान्येव सक्तिभ्यः सिकता यथा ॥ ४७ ॥
सेवकेभ्यस्तथा भूपो वस्त्राण्याभरणानि च।
असंख्यानि यथा वृक्षः पत्राणि प्रददात्ययम् ॥ ४८ ॥
फलं तस्याभिलाषोऽयं यथा प्रीतिस्त्वया सह।
जायते न तु तद्वृद्धिदर्शनेऽस्ति मनोरथः ॥ ४९ ॥
एवंविधोऽपि भूपालः प्रथितो यशसा भुवि।
त्वदाज्ञैकाभिलाषोऽस्ति तूर्णमाज्ञापयस्व तत् ॥ ५० ॥
तथेत्यजेजमेस्त्रेण कथिते हर्षपूरितः।
प्रत्यायातः स्वनगरं गृहीत्वोपायनं महत् ॥ ५१ ॥
श्रुत्वा दूतमुखाद्वाक्यं जातानन्दो महीपतिः।
अमन्यतैकमात्मानं निर्मुक्तमिव बन्धनात् ॥ ५२ ॥
नेतुं विकाशं तद्भाग्यपुष्पं बद्धमनोरथः।
विधा''''मधुमासोऽयं प्रसन्नोऽभून्मृगीदृशः ॥ ५३ ॥
संजाता स्वप्नमध्येऽपि बाला बन्धनबन्धिता।
अद्भुतं भाग्यवशतः प्रत्यक्षं मोचिता स्वियम् ॥ ५४ ॥
स हि धन्यो नृलोकेऽस्मिन्नसत्यमिव मन्यते।
इदं सत्यं महाबुद्धिर्यो नित्यं योगतत्परः ॥ ५५ ॥
कथं मायामयं स्वप्नं सत्यं जानाति बुद्धिमान्।
दृष्ट्वापि तत्फलाकाङ्क्षी न स्याद्यदि सुखी भवेत् ॥ ५६ ॥
दृष्ट्वा सुतनयं हर्षयुक्तो राजशिरोमणिः।
तदुक्तं रचयामास विवाहरचनां तदा ॥ ५७ ॥
पूर्वं तु कल्पयामास स्वर्णरत्नमयं ततः।
सहस्रमेकं क्रीडार्थं पाञ्चालीनां महीपतिः ॥ ५८ ॥

एवं दासीसहस्रं तु दिव्यरूपं महामनाः ।
तथा रत्नमयं चैकं ताटङ्कानां नरोत्तमः ॥ ५९ ॥
केयूरकटकादीनि संख्याविरहितान्यपि ।
सहस्रं मुकुटानां च महार्घमणिसंस्कृतम् ॥ ६० ॥
चित्रैकं वस्त्ररत्नानां सहस्रं धरणीधरः ।
समानयामास परो ददर्श स्वयमाहृतम् ॥ ६१ ॥
सहस्रमश्वरत्नानामुष्ट्राश्वतरदन्तिनाम् ।
तथैव कल्पयामास प्रत्येकं स महीपतिः ॥ ६२ ॥
तथा सौगन्ध्यसंयुक्तं यावद्द्रव्यं सुदुर्लभम् ।
तावदाराधयामास तदर्थं राजकुञ्जरः ॥ ६३ ॥
तस्मिन्निष्पादिते कार्ये संतुष्टः पार्थिवोत्तमः ।
आज्ञापयामास ततः स्वयमाहूय मन्त्रिणः ॥ ६४ ॥
एकं स्वर्णी रथं दिव्यं विमानः परमाद्भुतम् ।
परं नालोकितो जातु संवादयतु सत्वरम् ॥ ६५ ॥
इति भूपवचः श्रुत्वा प्रणमन्तो मुहुर्मुहुः ।
तथा ते रचयामासुस्तदद्भुततरे भुवि ॥ ६६ ॥
रत्नस्तम्भमयं हर्म्यं सुवर्णकृतबन्धनम् ।
तथा दृढतरं शुभ्रु गवाक्षशतसंकुलम् ॥ ६७ ॥
समानीयैव पुरतः कौतूहलशतान्वितम् ।
तत्तदा दर्शयामासुर्दृष्ट्वाभूत्सोऽपि विस्मितः ॥ ६८ ॥
निधाय तत्र तां बालां पाञ्चालीभिः सहोत्तमाम् ।
सदा तत्केलिनिरतां नवयौवनशालिनीम् ॥ ६९ ॥
दासदासीगणयुतां प्राप्तकामां सुमध्यमाम् ।
मेरुं प्रस्थापयामास तनयां पार्थिवोत्तमः ॥ ७० ॥
पितरावभिवन्द्याथ हर्षोत्पन्नाश्रुवर्षिणी ।
जोलेखा निर्जगामाथ श्रिया परमया युता ॥ ७१ ॥

तथा प्रासादिकाः सर्वा बालामनुप्रसाधनम्।
कृत्वा विनिर्गता तारा तारा शशिकलामिव ॥ ७२ ॥
काचिद्दासेरिकारूढा काचिदश्वस्थिता ययौ।
अपरा स्वयमेवासीत्तथापि गजगामिनी ॥ ७३ ॥
तथैव सेवकास्तस्या उष्ट्राश्वगजगामिनः।
प्रययुरबलाचक्रं रक्षन्तः शस्त्रपाणयः ॥ ७४ ॥
वीणावेणुनिनादेन मृदङ्गस्वनितेन च।
कलालापेन चैतासां प्रतिध्वानितमम्बरम् ॥ ७५ ॥
गायन्त्योऽपि हसन्त्यश्च क्रीडन्त्योऽपि परस्परम्।
ते तथा हर्षसंयुक्ताः प्रययुस्तत्पुरं प्रति ॥ ७६ ॥
तथा भूपालतनया सुखिताभूत्सुमध्यमा।
तस्याश्चान्तरजं दुःखं यथा नैवान्वमन्यत ॥ ७७ ॥
चिन्तारात्रेर्नृणां नूनं हर्षमित्रोदयो भवेत्।
विप्रयोगभयस्यापि समीप्याभयता तथा ॥ ७८ ॥
तस्या नृपसुतायास्तु नैवाभवदखण्डिता।
न ददर्श सुहृत्प्राप्तिं व्युष्टं यस्यां सुलोचना ॥ ७९ ॥
संप्राप्य निकटं तस्य नगरस्य नृपात्मजा।
तत्रैव स्थापयामास बलं बुद्धिबलोर्जिता ॥ ८० ॥
श्रमं मार्गोद्भवं दूरीकर्तुं यावदवस्थितम्।
क्षणमेकं बलं तावद्दिवसोऽस्तमुपाययौ ॥ ८१ ॥
निशां तामतिवाह्यैकां प्रभाते भूपकन्यका।
पार्श्वे साजेजमेस्तस्य प्रेषयामास सेवकम् ॥ ८२ ॥
स त्वं शीघ्रमितो गत्वा संदेशं प्रापयाधुना।
तथास्य लोकनाथस्य कथनीयमिदं वचः ॥ ८३ ॥
जोलेखानाम तनया तैमोरस्य महात्मनः।
त्वदाज्ञयेह संप्राप्ता त्वया संभाव्यतामियम् ॥ ८४ ॥

श्रुत्वा दूतमुखाद्वाक्यं प्रहर्षोत्फुल्ललोचनः।
अमन्यतैकमात्मानं लोकेऽखिलोकनायकः॥ ८५॥
दुन्दुभिं ताडयामास नगरेऽजेजमेस्तकः।
सर्वे लोका बहिरितो निर्गच्छन्तु ममाज्ञया॥ ८६॥
गजवाजिसहस्रौघैरनेकैः सहितस्तथा।
गृहीत्वा दुर्लभं वस्तु लोके सर्वं समन्ततः॥ ८७॥
समानेतुं स्वयं सोऽपि निर्गतः सेवकैर्वृतः।
तां भूपालसुतां रम्यां सर्वलक्षणसंयुताम्॥ ८८॥
ततस्तदाज्ञया सर्वे निर्गताः पुरवासिनः।
नानातीर्थार्थिकुशला नानोन्नयनपाणयः॥ ८९॥
सर्वालंकारसंयुक्ता अप्सरःसदृशो भुवि।
तदैव निर्गताः सर्वा नर्तक्यो नर्तनतत्पराः॥ ९०॥
गायन्तो गायनाश्चैव गन्धर्वोपमनिःस्वनाः।
तदाज्ञया विनिर्याता गीतशास्त्रविचक्षणाः॥ ९१॥
नानार्थकुशलास्तद्वद्दूतमागधवन्दिनः।
निर्ययुर्यत्र तत्रस्थास्तदाज्ञावशवर्तिनः॥ ९२॥
कुहका मान्त्रिकाश्चैव ये चान्ये मायिनः परम्।
स्वमायां दर्शयन्तस्ते निर्गतास्तद्वशास्तदा॥ ९३॥
वेणुवीणामृदङ्गानां निःस्वनेन समाकुलम्।
शुशुभे तद्बलं तत्र देवसेनोपमं भुवि॥ ९४॥
कुतूहलशताविष्टा यथा राजसुता गता।
तथैवाजेजमेस्तोऽपि निर्गतो हर्षपूरितः॥ ९५॥
एवमेव तदा सर्वे हर्षपूरितमानसाः।
गायन्तश्च हसन्तश्च प्राप्तास्तन्निकटं शनैः॥ ९६॥
यावत्प्राप्तोऽन्तिकं तारपल्लीवलयितुं पुरः।
तावदेकं ददर्शासौ स्थलं ताराधिपोपमम्॥ ९७॥

अवरुह्याथ वाहात्तु संमुखं रचयन्मुहुः ।
प्रणतिं प्रययौ हर्षपुलकाङ्कितविग्रहः ॥ ९८ ॥
दृष्ट्वा तमागतं भूपदासास्तस्या मृगीदृशः ।
सभाजनायोपगताः प्रणेमुर्मुदिताशयाः ॥ ९९ ॥
गृहीत्वा प्रणतिं तेभ्यो दत्त्वा तद्वत्तदाशिषः ।
कुन्ददन्तद्युतिर्भूपस्तदाभूद्धसिताननः ॥ १०० ॥
पप्रच्छानामयं तेषां हर्षेणोत्फुल्ललोचनः ।
कच्चिन्मार्गोद्भवं कष्टं नासं दूरगतैः परः ॥ १०१ ॥
ततोऽप्युपायनार्थं तद्वस्त्वानीतं स्वकेच्छया ।
तदग्रे स्थापयामास स दिवेऽपि सुदुर्लभम् ॥ १०२ ॥
तथा तत्सेवकान्सर्वान्यथायोग्यतया नृपः ।
ततः संभावयामास प्रीतिमानधनादिभिः ॥ १०३ ॥
एवं सोऽजेजमेस्त्रस्तान्पूजयित्वा पृथक्पृथक् ।
तत्रैवैकां निशां तस्थौ प्राप्तपूर्णमनोरथः ॥ १०४ ॥
अतिवाह्यैव तां रात्रिं कथाभिर्मुदिताशयः ।
प्रातः स नः प्रवेशयदध्व(?)र्भूपपुरे ततः ॥ १०५ ॥

इति यवनभाषापारगमपण्डितश्रीवरेण विरचिते कथाकौतुके षष्ठ कौतुकम् ।

---

सप्तम कौतुकम् ।

दर्शयन्नुत्पथा कालकुहकोपरथास्थितम् ।
किंचिद्विभाति यल्लोकविलप्रणविचक्षणः ॥ १ ॥
आशालब्धं मनः पूर्वं करोत्येकत्र मायया ।
पुनस्तदेव नैराश्यवशेनायं सुदुःखितम् ॥ २ ॥
दर्शयत्येव मधुरं किमस्याशु फलं पुनः ।
यद्भुक्त्वा जीवलोकोऽयं तिक्तास्यो जायते परम् ॥ ३ ॥
एवं प्रातस्तदाजेजमेस्रो यावत्समुत्थितः ।
गन्तुं स्वनगरं सर्वान्समादायैव सत्वरम् ॥ ४ ॥

तावत्स्थलातुरोत्थेयं बाला हरिणलोचना।
प्रोवाच वचनं धात्री तदुत्कण्ठाकुलाशया॥ ५॥
उपायः क्रियतां मातर्येन पश्याम्यमुं प्रियम्।
विनैतद्दर्शनं काचिद्धृतिर्नैवास्ति मेऽधुना॥ ६॥
जलं प्राप्य तृषार्तोऽपि न तत्पात्रं विना क्षमः।
यथैव विद्धि मां मातस्तथैतद्दर्शनं विना॥ ७॥
तादृशोत्कण्ठितां बालां तत्रोपायेन साकरोत्।
स्थले रन्ध्रं विधृत्यैकं नेत्रमात्रं मनीषया॥ ८॥
चक्रे तेनैव मार्गेण दर्शनं पार्थिवात्मजां।
दृष्ट्वैवाजेजमेस्तं तमत्यजच्छ्वाससंततिम्॥ ९॥
हा मातर्विहितं किं नु वेधसाद्भुतकर्मणा।
ममैव मन्दभाग्याया विपरीतं सुदुःखदम्॥ १०॥
हा कष्टमद्भुतं कर्म विहितं विधिना मम।
असमाप्तं गृहं यावद्भित्तिर्निष्पतिता कथम्॥ ११॥
न हि सोऽयं मया दृष्टः स्वप्ने यो लोकसुन्दरः।
यदर्थं विहितं मातरियदन्वेषणादिकम्॥ १२॥
न हि सोऽयं स्वचैतन्यं येन मेऽपहृतं बलात्।
विधायात्यद्भुतां मायां जडता प्रतिपादिता॥ १३॥
न हि सोऽयं विलोक्यापि ममैवोन्मत्तरूपिणीम्।
नीत्वा पुनः स्मृतिं कृत्वा नामदेशनिरूपणम्॥ १४॥
हा कष्टं धिगिदं भाग्यं तदा सुखविवर्जितम्।
तथैव मामकं जन्म निन्दितं चिन्तयान्वितम्॥ १५॥
मया खर्जूरवृक्षोऽयं रोपितः फललुब्धया।
तत्रैवाधिगतं किं तु प्राप्ता कण्टकसंहतिः॥ १६॥
मनःक्षेत्रे मयोप्तं तु सुखबीजं स्वयेच्छया।
परं त्वधिगतं मातः कथं दुःखफलं त्विदम्॥ १७॥

प्रत्यहं कृपणैवाहं निधानार्थं कृतश्रमम् ।
लब्ध्वापि तत्कथं कार्यं पतितं भुजगैः सह ॥ १८ ॥
कुसुमावचयं कर्तुमुद्यानं प्रस्थितास्म्यहम् ।
न तदाप्तं परं जातं कण्टकैर्व्यथितं वपुः ॥ १९ ॥
अहो चिन्तातुरैवाहं धर्षितापि मरुस्थले ।
गच्छन्ती शुष्ककण्ठौष्ठतालुजिह्वा ततः परम् ॥ २० ॥
दैवाद्दृष्ट्वापि स्वच्छाम्भः पतिता पुनरुत्थिता ।
पातुं समागता यावत्तावत्पङ्कायितं जलम् ॥ २१ ॥
गृह्यते यदि लीलार्थं शशकोऽपि मया पुनः ।
मदर्थं विक्रमोदारः सोऽपि सिंहायते परम् ॥ २२ ॥
शोकाम्भोधौ निमग्नास्मि चित्तोऽपि शतसंकुले ।
क्वचिदूर्ध्वं प्रयातापि तथैवाधः क्वचिन्मुहुः ॥ २३ ॥
यदि शोकाम्बुधौ दैवात्प्रकटाशा तरी क्वचित् ।
तदैव हर्षसंयुक्ता पूर्णाशा संभवाम्यहम् ॥ २४ ॥
पुरा स्वप्नेऽभवत्कान्तसामीप्यं सुखितं मम ।
सारं सारं तदैवादिकालोरगनिभं मुहुः ॥ २५ ॥
सत्यं चिन्तान्विता लोके नास्त्यन्या कापि मां विना ।
तथैव दुःखितानां च परं दुःखपरायणा ॥ २६ ॥
नास्ति मेऽद्य मनोऽवश्यं मनोहर्ता न हस्तगः ।
अत एव स्वयं वक्षः कराभ्यां ताडयाम्यहम् ॥ २७ ॥
क्रौर्यं मुञ्चाधुनाद्यान्तःस्नेहार्द्रं हृदयं कुरु ।
अबलादलना नूनं किमैश्वर्यं भविष्यति ॥ २८ ॥
यदा न दीयते मह्यं कान्तवासः करे शुभम् ।
तथैव मा कुरुष्वाद्य मनो मे परकाङ्क्षितम् ॥ २९ ॥
मा विदारय ते चिन्तानखाग्रेणांशुके मम ।
परस्परं करस्पर्शमलिनं वापि मा कुरु ॥ ३० ॥

किं तु केनापि च कथं विहितं यत्पुरा मया।
प्राप्यान्तं तदैवाद्य वैपरीत्यं यथा त्विदम् ॥ ३१ ॥
दाहं मा कुरु कामाग्निज्वालया मामसांप्रतम्।
चिन्तोरगपरीताङ्गं निधानमिव मद्वपुः ॥ ३२ ॥
एवं चिन्तातुरा बाला बाष्पाकुलितलोचना।
क्रन्दमानापि करुणं मूर्छितेवापतद्भुवि ॥ ३३ ॥
तावत्समुत्थितां वाणीं शुश्रावैतां नृपात्मजा।
अभ्युत्तिष्ठ महाभाग्ये त्यज चिन्तां सुदुःस्थिताम् ॥ ३४ ॥
प्रियो नाजेजमेस्त्वस्ते विनैतां नाधिगच्छसि।
कान्तमस्मान्मते(?)भर्ता प्रसिद्धमुपयास्यति ॥ ३५ ॥
मा भूद्जेजसङ्कोत्थभयं ते चारुलोचने।
अतोऽप्यक्षतशीलैव भविष्यसि वराङ्गने ॥ ३६ ॥
ख्यातः पुरुषरूपेण रहितस्तद्गुणैरयम्।
तस्मात्सुभ्रु न कर्तव्या चिन्तैतत्संगमोद्भवा ॥ ३७ ॥
इति श्रुत्वा वचो दिव्यं धरणीधरपुत्रिका।
प्राप्तसंज्ञा बभूवाथ विस्मयाविष्टमानसा ॥ ३८ ॥
विहाय क्रन्दनं तत्र त्यक्तबाष्पारुणेक्षणा।
ईषद्धर्षयुता बाला तदभूत्तनुमध्यमा ॥ ३९ ॥
विधाय सकलां रात्रिं रोदनं भूपकन्यका।
प्रतीक्षन्तीव तद्वाक्यं धैर्ययुक्ता बभूव सा ॥ ४० ॥

इति यवनभाषापारगमपण्डितश्रीवरेण विरचिते कथाकौतुके सप्तमं कौतुकम्।

---

अष्टमं कौतुकम्।

प्रातरभ्युदिते सूर्ये प्राचीमस्तकशेखरे।
दक्षिणोत्तरदिक्सुभ्रुकर्णसौवर्णकुण्डले ॥ १ ॥
पश्चिमामुखशुद्धाग्निशिखासुतिलके पुनः।
अपारगगनाम्भोधिमचरत्स्वर्णसागरे ॥ २ ॥




व्योममानसतारौघहंसश्येनायते तया ।
जित्वा तमेनेहभूपदत्ताप्रापदद्‌....मौ(?) ॥ ३ ॥
हर्षेण महता युक्तो मौलिमण्डितमस्तकः ।
सर्वानानाययामास सामन्तान्स नराधिपः ॥ ४ ॥
विधायात्यद्भुतां भूषां विवाहसमयोचिताम् ।
तैरेव सहितोऽजेजमेस्रोऽसौ प्राविशत्सभाम् ॥ ५ ॥
शुशुभे स सभामध्ये वज्रपाणिरिवापरः ।
ध्वजच्छत्रपताकाभिः सहितोऽद्भुतदर्शनः ॥ ६ ॥
अद्भुतं तस्य तच्छत्रं दिव्यैश्वर्यसमन्वितम् ।
यच्छायामधिगम्यैव नरो राजा भवेद्भुवि ॥ ७ ॥
कृतं नीराजनं तावत्सेवकैर्मणिभिः परम् ।
तैरेवापतितो भूमौ सार्थकेयं वसुंधरा ॥ ८ ॥
तस्मिन्क्षणे महानासीदानन्दः पुरवासिनाम् ।
नर्तक्यो ननृतुस्तत्र नानागतिविशारदाः ॥ ९ ॥
वीणावेणुमृदङ्गानां निःस्वनः स महानभूत् ।
मिलितानां च लोकानां तदा तस्मिन्महोत्सवे ॥ १० ॥
गजवाजिसमाकीर्णा पदातिगणसंकुला ।
स्थानं तच्छुशुभे तत्र परानन्दमयं शुभम् ॥ ११ ॥
जोलेखासेवकास्तत्र हर्षिताः परमाद्भुतम् ।
मन्यमाना कथं बाला मुक्तेत्युन्मत्तभावतः ॥ १२ ॥
तदैवाजेजमेस्रोऽपि महाहर्षसमन्वितः ।
तदाख्या सफलं जन्म जानन्स्वकमरिंदमः ॥ १३ ॥
परं भूपालतनया मध्यकर्णे रथे स्थिता ।
एकैव दुःखिता तत्र दूषयामास वेधसम् ॥ १४ ॥
बत किं विहितं धातस्तव सत्यं मया(मा)हितम् ।
य(ब)त मां दुःखितामेव कथं नयसि दुःखताम् ॥ १५ ॥

न जाने विहितं किं तत्कार्यं प्रत्ययकारतः ।
येन शोकाम्बुधौ मग्नां निमज्जयसि मां मुहुः ॥ १६ ॥
प्रथमं स्वप्नमात्रेण मनो मेऽपहृतं म(त्व)या ।
अविचारेण चिन्तापि वितीर्णा बहुशस्त्वया ॥ १७ ॥
त्वयैवोन्मत्ततां नीता बन्धनेनापि बन्धिता ।
प्रसन्नेनापि..................वोन्मोचिता पुनः ॥ १८ ॥
नैतज्ज्ञातं सुबुद्ध्या यद्दयितान्वेषणादिकम् ।
विहितं त्वामनाश्रित्य तदेवापकृतायितम् ॥ १९ ॥
दुःखमेकं तु संप्राप्तिनैराशि(श्यं) मम सांप्रतम् ।
द्वितीयमपि संजातं भूपातिक्रमदर्शनात् ॥ २० ॥
निर्दयेन त्वया नित्यं कृतं मेऽपकृतं बहु ।
उपकारोऽधुना कार्यः कुरु सै(मै)वं शुभाशुभम् ॥ २१ ॥
मोहिताहं त्वया स्वप्ने किंचिद्दर्शय तद्गतम् ।
वदसीति पुनः कामं मामवाप्स्यसि मोहयन् ॥ २२ ॥
इति भूपालतनया चिन्ताशतसमाकुला ।
बहिः प्रादुरभूच्छब्दस्तावदासीन्मुखोद्गतः ॥ २३ ॥
इह प्राप्तोऽद्य भूपालस्त्वदर्थे वरवर्णिनि ।
नीलापगातीरभूमिसंन्यवेसितसैनिकः ॥ २४ ॥
इति कृत्वा च भूपालतनया व्याकुलाशया ।
तदैवालोकयामास तेनृपंचा(तां नृपश्चा)रुलोचना[म्] ॥ २५ ॥
संप्राप्य दर्शनं तस्या हर्षितोऽभून्नरोत्तमः ।
चकार रात्रिकां रत्नैः संख्याविरहितस्तदा ॥ २६ ॥
निधाय स्वर्णपात्रेषु मणिमुक्ताधिकं परम् ।
तथैव सेवकास्तस्याश्चक्रुर्नीराजनं ततः ॥ २७ ॥
पतितैर्मणिभिस्तत्र संपूर्णाभूद्वसुंधरा ।
चलितं न यथा शक्तो लोकौघः प्रस्खलद्गतिः ॥ २८ ॥

अमद्वाजिखुरक्षुण्णरत्नसंगतनिर्गताः।
यथा वह्विशिखास्तत्र प्रादुर्भूताः सहस्रशः॥ २९॥
नीलापगापि सा तत्र प्रथिता जवशालिनी।
पूर्णाभून्मणिमुक्ताभिः सिकताभिरिवापरा[गा]॥ ३०॥
एवं भूपालतनया रूपेणाप्रतिमा भुवि।
अतीताजेजमेस्तेण श्रिया परमया युता॥ ३१॥
ततस्तत्कौतुकं रम्यं नानाकौतुकसंयुतम्।
अमन्यत तदा भूप सुताकरगृहोपमम्॥ ३२॥
सापि तद्विप्रयोगार्ता रत्नपर्यङ्कमास्थिता।
कुसुमास्तरणोपेतं वेद कण्टकसंयुतम्॥ ३३॥
तथैव मुकुटं दिव्यं नानारत्नोपशोभितम्।
अमन्यताद्भुतं बाला गिरिभारोपमं तदा॥ ३४॥
सर्वाण्याभरणान्येवं जातं नृपमयान्यपि।
मन्यमानाबला वह्विविस्फुलिङ्गाकृतीन्यतः॥ ३५॥
चिन्तया मानसं यस्या युतं प्रियसमुत्थया।
लभते न सुखं जातु त्रिदिवेऽपि कदाचन॥ ३६॥
कश्चिदेव रणे शक्तः स्रातुं वीरशिरोमणिः।
शिरांसि यत्र शूराणां पतितानि सहस्रशः॥ ३७॥
यदि चक्षुर्भवेत्पूर्णं बाष्पेणाहतदर्शनम्।
तदा सौभाग्ययुक्तायास्तारायाः किं प्रयोजनम्॥ ३८॥
चित्तं चेतोहरेणैव मिलितं यदि दैवतः।
न जातु परसामीप्ये साभिलाषं भविष्यति॥ ३९॥
पश्य सूर्यप्रकाशेऽसौ पतङ्गः स्नेहसंयुतः।
न तथा जायते दीपशिखासंसक्तमानसः॥ ४०॥
सन्ति सौगन्ध्ययुक्तानि सुमनांसि न तेष्वयम्।
रसायुःप्रीतिमादत्ते मालतीकुसुमेषु यः॥ ४१॥

तथा कमलिनी भानुकिरणासक्तमानसा ।
सुधांशुं नयनानन्दकारणं नेक्षते कचित् ॥ ४२ ॥
एवं साजेजमेस्रस्य गृहे राजसुता सुखम् ।
ना सत्यत(स्त) तदा सुप्त(सा) दृष्टकान्ताभिलाषिणी ॥ ४३ ॥
तस्मिंस्तु मन्दिरे दासदासीगणसमाकुले ।
नित्यप्रमुदिते सैका, चित्रस्थेवाभवत्तदा ॥ ४४ ॥
सौवो(वि)दल्लास्तदा चक्रुः शङ्कय(या) शङ्किताः परम् ।
नानाप्रहरणोपेता रक्षाधर्मपरायणाः ॥ ४५ ॥
एवं निशां ततीवीणां(?) तदा सवयसामपि ।
दासीनां चैव सा बाला विशेषं नान्वमन्यत ॥ ४६ ॥
सततं रचयन्त्येव तदर्थे शयनं शुभम् ।
अमन्यत स्वयं बाला कण्टकास्तरणोपमम् ॥ ४७ ॥
सखीभिः सह सा तत्र मिथ्यैवालापतत्परा ।
किं तु कान्तगुणाख्यातरसासक्तमनोरथा ॥ ४८ ॥
तन्मध्येऽपि हसन्त्येवं सुधा(मुग्धा) परमया मुदा ।
हृदये चिन्तये(यो)पेतां विहिताक्रन्दना परम् ॥ ४९ ॥
मध्ये सखीजनस्यापि मूर्तैवासीत्प्रतिष्ठिता ।
तथापि मनसा कान्तध्यानशीलैव साभवे(व)त् ॥ ५० ॥
एवं राजेन्द्रतनया दिवसानि निनाय सा ।
अविज्ञाताशया ताभिः म(स)वयोभिः कथंचन ॥ ५१ ॥
गर्जिताक्रन्दनपरा त्राससौदामिनीयुता ।
विगलद्बाष्पधारौघा साभून्मेघानुकारिणी ॥ ५२ ॥
सान्त्प(न्त्व)यन्तेव दयितं गिरा मधुरया तदा।
सा तु तद्विप्रयोगार्ता प्रोवाच वचनं शुभम् ॥ ५३ ॥
स्वयं मेस्राख्यया नाथ कृतं देशनिरूपणम् ।
पूर्वं प्रियतराख्यातं नामापि कथितं त्वया ॥ ५४ ॥

मयाप्तं सकलं किंतु विपरीतमिदं कथम् ।
कथं त्वद्दर्शनं नूनं मम भाग्यवशेन तत् ॥ ५५ ॥
न जानेऽद्य कियत्कालं ज्वलितेनापि(प्य)हर्निशम् ।
त्वद्वियोगाग्निना कान्त दह्यते मामकं वपुः ॥ ५६ ॥
मधुवन्मानसोद्यानं विकासं मे नयाधुना ।
वपुःस्नेहौषधेनापि रक्ष चिन्तामयान्वितम् ॥ ५७ ॥
त्वदनाप्त्या हतं कार्यं पूर्वमासीत्त्वया पुनः ।
साधितं मे विधायैव देशे नामनिरूपणम् ॥ ५८ ॥
श्रुत्वैतज्जीविताशा मे जीवितेशाभवत्तदा ।
प्राप्यते नियतं कान्ते कुतोऽपि हृदि निश्चयः ॥ ५९ ॥
यदि बाष्पाकुलं चक्षुः सर्वतो हृतदर्शनम् ।
सुखं तन्मे परं यत्त्वां(त्वं) पश्य त्वैवैकमुत्तमम् ॥ ६० ॥
प्राप्यैकं दर्शनं नाथ त्वदीयं मनसेप्सितम् ।
अद्वितीयमिमं लोके मन्ये नानार्थसंयुतम् ॥ ६१ ॥
त्वत्प्राप्तिरेव लोकेऽस्मिंश्चिन्ता मनसि मेऽनिशम् ।
त्वय्येवाधिगते नाथे प्रार्थये नापरस्परम् ॥ ६२ ॥
कृत्वैव सकलां रात्रिं विषादं प्रातरेव सा ।
वायुं विज्ञापयामास ज्ञाताखण्डगतिः सदा ॥ ६३ ॥
त्वमेव जीवलोकेऽस्मिञ्जीवरूपेण जीवितम् ।
अनादिनिधनो देवो भूतचक्रप्रवर्तकः ॥ ६४ ॥
त्वय्येतत्सृज्यते विश्वं भवतैव हि खाद(खाद्य)ते ।
तथाहि पाल्यते सर्वं त्यज्यतेऽन्ते स्वमायया ॥ ६५ ॥
त्वमेकः सर्वभूतानामुत्तमः सर्वगो महान् ।
सर्वदेवमयः सर्वपूजितः सर्वसिद्धिदः ॥ ६६ ॥
पूर्वमेव हि भूपाल भद्रासनप्रतिष्ठितः ।
तथा तद्रत्नमुकुटदत्तुथादास्यजे(?) भवान् ॥ ६७ ॥

इति नुत्वैव प्रथमं पवनं लोकपावनम् ।
प्रश्रयावनिता तत्र प्रोवाच नृपकन्यका ॥ ६८ ॥
विदितं त्वदृते नान्यः कार्यं मे साधयिष्यति ।
परोपकारकरणे विरला हि भवादृशः ॥ ६९ ॥
बहुशोऽथ ददौ तस्मै संदेशं पार्थिवात्मजा ।
अन्वेषणार्थमेवास्य दयितस्य मुदान्विता ॥ ७० ॥
सकलेषु स मे कान्तः पुरग्रामाकरादिषु ।
वीक्षणीयः प्रयत्नेन भ्रमता सर्वतोदिशम् ॥ ७१ ॥
खुतनाख्यमितो गत्वा विषमं पश्य मे प्रियम् ।
श्येनाभिधाने सद्रूपनिधाने तं विलोकय ॥ ७२ ॥
मदालसगतिर्यत्र कुत्रापि स हि दृश्यते ।
मदर्थमननीयेऽसौ स्मृत्वैवेमां दशां मम ॥ ७३ ॥
कदाचित्साथ मध्यस्थो दृश्यतेऽसौ प्रियो मम ।
अनन्यसदृशो लोके सर्वलक्षणलक्षितः ॥ ७४ ॥
तदन्तरार्थमेवैकं समानीय ममाग्रतः ।
संदर्शय सखे किं वा स एवासौ भविष्यति ॥ ७५ ॥
दृष्ट्वा तमद्भुतं तुष्टिं याति चेन्मानसं मम ।
तदा शक्रसमं मन्ये प्रफुल्लं दैवयोगतः ॥ ७६ ॥
वृथा पूर्णाशया तद्वद्बाष्पाकुलविमोचना ।
शनैः शनैर्विवस्वन्तमुदयन्तं विलोक्य सा ॥ ७७ ॥
दासीभिः संस्कृतां तावत्सधर्मां नवमां सभाम् ।
प्रविश्यानन्दिता बाला सख्ये(खी)मध्ये सुधाभवत् ॥ ७८ ॥
एतदेवाभवत्कार्यं प्रत्यहं हर(रि)णीदृशः ।
तदीक्षणं तदालापस्तद्ध्यानं सर्वतस्तदा ॥ ७९ ॥
गृहे नैवाभवत्स्थातुं तच्चित्तं चिन्तयान्वितम् ।
सहसा सहसा ताभिर्निर्गता स्वगृहाद्बहिः ॥ ८० ॥

क्षणमाक्रन्दनपरा क्षणमानन्दनिर्भरा।
क्षणमुन्मत्तवद्बाला क्षणं चैतन्यसंयुता ॥ ८१ ॥
अमुं च नितरां बाला भृशोऽस्यां श्वाससंततिं।
सत्यं तत्स्पर्शनो भानुस्तीक्ष्णांशत्वमुपागतः ॥ ८२ ॥
कदाचिदेव विरहहिमाहततरं मु(हृदम्बु)जा।
तथा तत्प्राप्तिसुरभिर्विकासितवपुर्लता ॥ ८३ ॥
विहाय राजपुत्री सा सर्वं गृहसुखादिकम्।
तस्थौ नीलाभिधानान्तां समाश्रित्य सरिद्वराम् ॥ ८४ ॥
नाविन्दत सुखं रात्रौ न दिवा वरवर्णिनी।
तच्चिन्तनपरा नित्यं विरहाकुलमानसा ॥ ८५ ॥
मनस्तज्ज्ञाननिरतं चक्षुस्तद्दर्शनोत्सुकम्।
तदर्थं सकलं कर्म तं विना वेदना परम् ॥ ८६ ॥
परं तद्विरहोत्पन्नवैक्लव्यं सा यथागमत्।
शक्यते नहि तद्वक्तुं तथा वर्षशतैरपि ॥ ८७ ॥
यद्विप्रयोगनिस्त्रिंशनिक्षतं मानसं तदा।
तत्संगमौषधेनास्याः करोम्यद्यैव निर्व्रणम् ॥ ८८ ॥

इति यवनभाषापारंगमपण्डितश्रीवरविरचिते कथाकौतुकेऽष्टमं कौतुकम्।

---

नवम कौतुकम्।

अपरं कथयन्त्येवमितिहासं पुराविदः।
नानोपाख्यानकुशलाः श्रुतसागरपारगाः ॥ १ ॥
दिने दिने वर्द्धमानो रूपेणाप्रतिमो भुवि।
सत्यवाग्विजितक्रोधो दयावाञ्जनवल्लभः ॥ २ ॥
सोऽपरेभ्योऽपि पुत्रेभ्यो योसोभाग्यो(योसोफाख्यो)ऽतिबुद्धिमान्।
प्रीतिं ततान विततां ततस्तातस्य ता तदा ॥ ३ ॥
सुखं तज्जनकस्तेन पुत्रे नैवानुमन्यत।
परं विहाय तनयानेकादश मनोरमान् ॥ ४ ॥

तमेवैकं समादाय····सुरं सुतोपमम् ।
**याकोभ(याकूब)**नामधेयोऽसौ दिनान्यगमयत्सुखम् ॥ ५ ॥
तस्यैवं वर्तमानस्य **याकोभ**(याकूब)स्य गृहान्तिके ।
दिव्यानुभावः स महानासीदेको वनस्पतिः ॥ ६ ॥
सर्वकामप्रदो नित्यं सदा पुण्यफलोदयः ।
सततं सेवितो देवैः कल्पवृक्षोपमो भुवि ॥ ७ ॥
भाति स्म विमला नित्यं यस्य पल्लवसंततिः ।
वक्त्रं गुणगणं शंभोर्जिह्वावलिरिवोत्तमा ॥ ८ ॥
महिमा पादपस्यायं जायते स्म यदा यदा ।
**याकोभा(याकूबा)**ख्यस्य तनयाः शाखैकैकस्य तत्क्षणम् ॥९॥
ज्ञात्वा स्वमात्मजं किंचिद्यौवने निहितक्रमम् ।
तद्वल्ली तोमरं चारु करे तस्मै ददातु यम् ॥ १० ॥
एकैकं स ददौ भूपः पुत्रेत्य(?)त्रो परं शुभम् ।
प्रत्येकं तत्समुद्भूतं **योसोभा(यूसुफा)**ख्यं विना स तम्॥११॥
उद्योगं नाभवत्तस्य प्रशस्तमपि तत्तदा ।
जातेऽप्यस्मिन्नवा वल्ली प्रादुर्भूतास्य शाखिनः ॥ १२ ॥
समागत्यैकदा रात्रौ **योसोभा(यूसुफा)**ख्योऽतिसुन्दरः ।
जनकस्यान्तिकं वाक्यं प्रोवाच मधुरं शनैः ॥ १३ ॥
तपस्तप्त्वा परं तात मदर्थं तोमरं शुभम् ।
स्वर्गाच्छीघ्रं समानीय दीयतां मे सुखावहम् ॥ १४ ॥
आबाल्यादपि वृद्धत्वं यावद्र(?)स्तस्त्वमुत्तमम् ।
तदेव मे सदा स्वामी सर्वदुःखनिवारणम् ॥ १५ ॥
यद्वशेनैव समरे सर्ववीरशिरोमणिः ।
अहमेको भविष्यामि लोके सोदरपूजितः ॥ १६ ॥
इति पुत्रवचः श्रुत्वा तदर्थं बन्धनिश्चयः ।
तुष्टाव परमेशानं **याकोभाख्यः(याकूबाख्यः)** सुतप्रियः ॥१७

तावज्जयभ्रेवे(ज्जब्रई)लाख्यो देवदूतः समागमः ।
गृहीत्वा तोमरं दिव्यं निर्मितं विश्वकर्मणा ॥ १८ ॥
तस्यायु····धवस्याथ प्रभावं स महामतिः ।
तदग्रेऽकथयत्सर्वं सर्वदर्वी(र्शी) जितेन्द्रियः ॥ १९ ॥
.................................................... ।
न भयं जायते जातु दुष्टसत्त्वादिजं कचित् ॥ २० ॥
दस्यवः शत्रवश्चैव पलायन्तेऽस्य दर्शनात् ।
न बाधन्ते क्षुधा व्याधिर्नाधिर्नापि जरा तथा ॥ २१ ॥
स्तम्भभूतं दृढतरं विधैतद्राज्यसद्मनः ।
इत्युक्तान्तर्हिते तस्मिन्देवदूते महात्मनि ॥ २२ ॥
तोमरं तत्समानीय ददौ तस्मै महीपतिः ।
सोऽपि संप्राप्य तद्द्रव्यं सर्वसिद्धिप्रदायकम् ॥ २३ ॥
तदैव वैरिणां पृष्टं निष्पिपेष महाबलः ।
तद्दृष्ट्वा दुर्लभं सर्वे भ्रातरो वृद्धमत्सराः ॥ २४ ॥
प्रतीक्षन्तेऽपि तस्यासन्समये दुष्टचेतसः ।
स च तत्स्नेहसंयुक्तः सर्ववैरिविवर्जितः ॥ २५ ॥
भ्रातॄणामात्मनो वापि विशेषं नानुमन्यत ।
धन्यास्ते जीवलोकेऽस्मिन्सज्जना सर्वतो धरा ॥ २६ ॥
यद्धर्मवशतो लोकान्भारं धारयितुं क्षमः ।
एकधा स महाबुद्धिर्निशीथे जनकान्तिके ॥ २७ ॥
स्थितोऽपि निद्रासंसक्तमानसः समपूजयत् ।
जनकोऽपि तद्गुतस्नेह····बद्धपाशेन यन्त्रितः ॥ २८ ॥
कान्तं तद्वदनं पश्यन्नभूज्जागरतत्परः ।
निद्रायामेव योसोभ(युसुफ)नामधेयोऽतिसुन्दरः ॥ २९ ॥
अकरोन्मधुरं हास्यं द्विवारं तं विमोहयन् ।
प्रबुद्धोऽसौ क्षणान्निद्रामनुभूय ततः परम् ॥ ३० ॥

तमेवैकं समादाय····सुरं सुतोपमम्।
याकोभ(याकूब)नामधेयोऽसौ दिनान्यगमयत्सुखम्॥ ५॥
तस्यैवं वर्तमानस्य याकोभ(याकूब)स्य गृहान्तिके।
दिव्यानुभावः स महानासीदेको वनस्पतिः॥ ६॥
सर्वकामप्रदो नित्यं सदा पुण्यफलोदयः।
सततं सेवितो देवैः कल्पवृक्षोपमो भुवि॥ ७॥
भाति स विमला नित्यं यस्य पल्लवसंततिः।
वक्तं गुणगणं शंभोर्जिह्वावलिरिवोत्तमा॥ ८॥
महिमा पादपस्यायं जायते स यदा यदा।
याकोभा(याकूबा)ख्यस्य तनयाः शाखैकैकस्य तत्क्षणम्॥९॥
ज्ञात्वा स्वमात्मजं किंचिद्यौवने निहितक्रमम्।
तद्वली तोमरं चारु करे तस्मै ददातु यम्॥ १०॥
एकैकं स ददौ भूपः पुत्रेत्य(?)वो परं शुभम्।
प्रत्येकं तत्समुद्भूतं योसोभा(यूसुफा)ख्यं विना स तम्॥११॥
उद्योगं नाभवत्तस्य प्रशस्तमपि तत्तदा।
जातेऽप्यसिन्नवा वल्ली प्रादुर्भूतास्य शाखिनः॥ १२॥
समागत्यैकदा रात्रौ योसोभा(यूसुफा)ख्योऽतिसुन्दरः।
जनकस्यान्तिकं वाक्यं प्रोवाच मधुरं शनैः॥ १३॥
तपस्तप्त्वा परं तात मदर्थे तोमरं शुभम्।
स्वर्गाच्छीघ्रं समानीय दीयतां मे सुखावहम्॥ १४॥
आबाल्यादपि वृद्धत्वं यावद्र(?)स्तस्यसुत्तमम्।
तदेव मे सदा स्वामी सर्वदुःखनिवारणम्॥ १५॥
यद्दर्शनेनैव समरे सर्ववीरशिरोमणिः।
अहमेको भविष्यामि लोके सोदरपूजितः॥ १६॥
इति पुत्रवचः श्रुत्वा तदर्थे बन्धनिश्चयः।
तुष्टाव परमेशानं याकोभाख्यः(याकूबाख्यः) सुतप्रियः॥१७

तावज्ज्यभ्रेवे(ज्जब्रई)लाख्यो देवदूतः समागमः ।
गृहीत्वा तोमरं दिव्यं निर्मितं विश्वकर्मणा ॥ १८ ॥
तस्यायु····धवस्याथ प्रभावं स महामतिः ।
तदग्रेऽकथयत्सर्वं सर्वदर्वी(र्शी) जितेन्द्रियः ॥ १९ ॥
··········································· ।
न भयं जायते जातु दुष्टसत्त्वादिजं क्वचित् ॥ २० ॥
दस्यवः शत्रवश्चैव पलायन्तेऽस्य दर्शनात् ।
न बाधन्ते क्षुधा व्याधिर्नाधिर्नापि जरा तथा ॥ २१ ॥
स्तम्भभूतं दृढतरं विध्येतद्राज्यसद्मनः ।
इत्युक्त्वान्तर्हिते तस्मिन्देवदूते महात्मनि ॥ २२ ॥
तोमरं तत्समानीय ददौ तस्मै महीपतिः ।
सोऽपि संप्राप्य तद्द्रव्यं सर्वसिद्धिप्रदायकम् ॥ २३ ॥
तदैव वैरिणां पृष्टं निष्पिपेष महाबलः ।
तद्दृष्ट्वा दुर्लभं सर्वे भ्रातरो वृद्धमत्सराः ॥ २४ ॥
प्रतीक्षन्तेऽपि तस्यासन्समये दुष्टचेतसः ।
स च तत्स्नेहसंयुक्तः सर्ववैरिविवर्जितः ॥ २५ ॥
भ्रातॄणामात्मनो वापि विशेषं नानुमन्यत ।
धन्यास्ते जीवलोकेऽस्मिन्सज्जना सर्वतो धरा ॥ २६ ॥
यद्धर्मवशतो लोकान्भारं धारयितुं क्षमः ।
एकधा स महाबुद्धिर्निशीथे जनकान्तिके ॥ २७ ॥
स्थितोऽपि निद्रासंसक्तमानसः समपूजयत् ।
जनकोऽपि तद्भुतस्नेह····बद्धपाशेन यन्त्रितः ॥ २८ ॥
कान्तं तद्वदनं पश्यन्नभूज्जागरतत्परः ।
निद्रायामेव योसोभ(यूसुफ)नामधेयोऽतिसुन्दरः ॥ २९ ॥
अकरोन्मधुरं हास्यं द्विवारं तं विमोहयन् ।
प्रबुद्धोऽसौ क्षणान्निद्रामनुभूय ततः परम् ॥ ३० ॥

अभूत्स्वप्नेऽद्भुतं दृष्ट्वा विस्मयाविष्टमानसः ।
तावत्पप्र(प्र)च्छ तं बालं जनको विस्मयान्वितः ॥ ३१ ॥
विहितं किं त्वया स्वप्ने स्मितं किं दृष्टमद्भुतम् ।
सोऽप्युवाच ततस्तात मया स्वप्ने निरीक्षितु(त)म् ॥ ३२ ॥
अद्भुतं नैव जानामि फलं किं तत्समुद्भवम् ।
सूर्योदयो ग्रहाः सर्वे सनक्षत्राः सराशयः ॥ ३३ ॥
बद्धाञ्जलिपुटास्तात दृष्ट्वा मत्प्रणतौ मया ।
श्रुत्वावोचत्पिता तूर्णीं भ[व] बालक मा पुनः ॥ ३४ ॥
कथयस्वान्तिकं स्वप्नं कस्यापि वचनान्मम ।
दृष्टमत्यद्भुतं स्वप्नं राजदं वैरिणस्तव ॥ ३५ ॥
कदाचित्कथयन्त्येवमन्यथा तत्फलं भवेत् ।
भवतोऽहर्निशं वैरपरा दुष्टमनोधियः ॥ ३६ ॥
न सहन्ते पुनः स्वप्नफलं ते भ्रातरः परम् ।
यथोक्तं वचनं तेन जनकेन हितैषिणा ॥ ३७ ॥
कंचित्कालं तथैवासौ पालयामास बुद्धिमान् ।
ततः कतिपयाहोभिः गतं तत्प्रकटं पुनः ॥ ३८ ॥
चतुक्क(ष्क)र्णागतं वाक्यं स्वप्नकाले न विद्यते ।
कवयः कथयन्त्येवं यदीच्छा जीवितुं चिरम् ॥ ३९ ॥
हस्तन्यस्य सु(कं)खं जातु दीयते न मनो वचः ।
शुद्धं साधु वचो हंसं निर्गतं मुखपञ्जरात् ॥ ४० ॥
दुर्जनौ सुस्नुदादोप(?)नखाघातेन बाधते ।
गुप्तं श्रुत्वा जनोद्गीतं तत्स्वप्नार्थमितस्ततः ॥ ४१ ॥
सर्वे ते समविन्दन्त भ्रातरोऽस्नेहता(तां) पितुः ।
किमप्यार्ये विचार्योवमनार्यं कार्यमद्य नः (?) ॥ ४२ ॥
कथं सर्वाङ्गह(हा)त्येकसुतस्नेहविमोहितः ।
न जानीमः किमस्त्यस्य जनकस्यात्र मानसे ॥ ४३ ॥

कथं न वेत्ति प्रेमान्धो दुःखमस्स(स्य)द्वियोगजम्
परं किं वा तपस्तप्तं योसोभा(यूसुफा)ख्येन दुष्करम् ॥४४॥
यद्वशेन पिता नैव क्षणमेकं जहत्यमुम् ।
तत्स्नेहेन जराजीर्णशरीरो वपुषोऽप्ययम् ॥ ४५ ॥
कथमस्मद्भुजस्तम्भमभितोऽप्यनवेत्त्ययम् ।
अथवा जीवलोकेऽस्मिन्वासना पूर्वकर्मजा ॥ ४६ ॥
अनिवार्यग्रतो(?)याति सुखदुःखानुवर्द्धिनी ।
किंवायं मोहितो धात्रा मायाजवनिकां पराम् ॥ ४७ ॥
प्रक्षिप्यो क्षणयो(?)स्तेन नेक्षतेऽसौ शुभाशुभम् ।
बुद्धिर्वृद्धस्य याता किं गृहीत्वायं शिशुं स्वयम् ॥ ४८ ॥
यज्जहात्यधुना मोहादस्मात्राज्यधुरांध(रंध)रान् ।
नैकोऽयं राज्यभागी स्याद्वयमप्यंशभागिनः ॥ ४९ ॥
कथं त्वमेव मत्पुत्रं(?)मंत्र तेन पिता परान् ।
एवं चिन्तातुराः सर्वे कथयन्त्या परस्परम् ॥ ५० ॥
तत्प्रीतिखण्डनोपायसमासक्तधियोऽभवन् ।
कथं प्रेमानयो(येत) क्षिप्रं····येः स्यात्खण्डितं परम् ॥ ५१ ॥
निपुणस्य यदा कार्यं कठिनं संपतिष्यति ।
परबुद्धिबलं ग्राह्यं तदा तत्कर्मसिद्धये ॥ ५२ ॥
यद्यप्येकेन दीपेन प्रकाशो न ग्र(गृ)हान्तरे ।
भवेत्तमोविनाशार्थं कल्पनीयास्तदा परे ॥ ५३ ॥
समाहूयात्मनस्तावत्सुहृत्संबन्धिबान्धवान् ।
कृत्यै(त्यै)कदा सभां तस्यां निषण्णास्ते महौजसः ॥ ५४ ॥
प्रोचुः पृथक् पृथक् सर्वे वचनं वैरतत्पराः ।
तेषामेकोऽवदद्वाक्यं कठिनं पापसंयुतम् ॥ ५५ ॥
जाते(तं) श्रेयस्करं नैतद्वद कार्यं विना परम् ।
गुप्तं भूमौ निधायाशु(शु)मितो नीत्वा वनान्तरम् ॥ ५६ ॥

वैरिचिन्ताविनिर्मुक्ता गतबाधास्तदा वयम् ।
इति श्रुत्वा वचस्तस्य निर्घृणस्यापरोऽवदत् ॥ ५७ ॥
अपराधं विना बालघातो दुःखाय देहिनाम् ।
प्रद्रुतोऽसौ तत(तो)ऽप्येनं पतितं मारयिष्यति ॥ ५८ ॥
वयं शङ्कास्पदं नैव न तथा दोषभागिनः ।
इत्याकर्ण्याभवत्तावदपरोऽपि विचक्षणः ॥ ५९ ॥
यद्ययं क्रियतेऽस्माभिर्वधोपायः शिशौ पुनः ।
तदेव सुमहत्पापं सैव निन्दापि किं फलम् ॥ ६० ॥
कार्यमेवाधुना कार्यं परं जनकपुत्रयोः ।
यथानयोर्विप्रयोगः प्रेमातिशयशालिनोः ॥ ६१ ॥
गृध्रगोमायुसंकीर्णं यक्षोरगसमाकुलम् ।
पानीयपादे(द)पलतातृणगुल्मविवर्जितम् ॥ ६२ ॥
सुकुमारममुं घोरं दूरं नीत्वा वनान्तरम् ।
बालोऽयं त्यज(ज्य)ते तत्र किं वधेन प्रयोजनम् ॥ ६३ ॥
तदायमबलो वालाः(लः) क्षुत्पिपासो(सा)प्रपीडितः ।
एकाकी विजने तस्मिन्स्वयं यातेव पञ्चताम् ॥ ६४ ॥
तद्वात्रनिपतन्निम्न स्रवद्रुधिररागतः ।
भवतां मलिनं माभूच्छत्रं परमनिर्मलम् ॥ ६५ ॥
समाकर्ण्याथ तद्वाक्यं परं बुद्धिर्व(ब)लोर्जितः ।
अपरोऽपि(प्य)वदत्तेषां प्राप्तकालमिदं वचः ॥ ६६ ॥
परं वधोमि(ऽपि)शस्त्रेण क्षणमेकं सुदुःखदा(दः) ।
मरणं क्षुत्पिपासाद्यं मा भूत्कस्यापि जातचित् ॥ ६७ ॥
एतावदुक्त्वा विरते तस्मिन्मतिमतां वरम् ।
प्रोवाच शनकैर्वाक्यमन्ये(न्यो)ऽप्येको दयान्वितः ॥ ६८ ॥
कूपमेकं निरीक्षध्वमि(म)तिदूरेऽन्तिकेऽपि वा ।
प्रक्षिप्यैनं शिशुं तत्र सुखं स्यात्परमे वनः(ने) ॥ ६९ ॥

तत्रस्थं दैवयोगेन संप्राप्तोऽपि पिपासितः।
जलाभिलापी सार्थस्तं समुद्ररतिकूपतः ॥ ७० ॥
ततः सार्थपतिर्लब्ध्वा शिशुमेनं दशान्वितः।
दासभावा(वं) सुतत्वं वा नयतीति विनिश्चयः ॥ ७१ ॥
दासतां सार्थपतिना नीतेऽप्यस्मिन्पितुस्ततः।
भवेद्राज्यादिकं सर्वमस्माकं हस्तसर्वगम् ॥ ७२ ॥
इति श्रुत्वो(त्वै)व ते सर्वे प्रहर्षोत्फुल्ललोचनः(नाः)।
वचनं साधुमन्यन्त तत्कार्याबद्धमानसः(साः) ॥ ७३ ॥
एतदेव दृढं मन्त्रं कृत्वा सर्वे यशोदरः(सर्वेऽथ सोदराः)।
सुहृदस्तान्समामन्त्र्य प्रययुः स्वं स्वमालयम् ॥ ७४ ॥
धन्यास्ते मानवा येषां द्वयाविते(द्वयं चित्तं) न जायते।
ममता यौवनोद्भूतो(ते) मदेऽपि च सुदुःसहे ॥ ७५ ॥
विरला जीवलोकेऽस्मिन्पुरुषाः समदृष्टयः।
लोभक्रोधविनिर्मुक्ताः शिवध्यानपरायणाः ॥ ७६ ॥
दुर्लभा मनुजाः सर्वं स्वप्नमायोपमं जगत्।
मन्यमानाः सदायोगी(गि) निपुणाः शेरते सुखम् ॥ ७७ ॥
हिताहितकृतैकार्थविवेचनपरायणाः।
सामान्यास्ते क्षितौ किंचिल्लोभादिवशवर्तिनः ॥ ७८ ॥
परमाहंकृतियुता वैरान्धधिषणाः सदा।
अवरास्ते नरा भूमौ भारभूता विशेषताः(तः) ॥ ७९ ॥
अन्येद्युर्भ्रातरः सर्वे मिलित्वा जनकान्तिकम्।
उपाजग्म(ग्मुः) समारब्धमन्त्रसाधनतत्पराः ॥ ८० ॥
विधाय प्रणतिं तस्मै प्रश्रयानतमस्तकाः।
जानुभ्यामवनिं गत्वा माययोचुः शुभां गिरम् ॥ ८१ ॥
विज्ञप्तिं शृणु ताताद्य सदैव गृहवर्तिनाम्।
अस्माकमस्ति राजेन्द्र मृगयारसिकं मनः ॥ ८२ ॥

योसोभा(यूसुफा)ख्यसमुं(ममुं) बालं वनर्दन(?)लताकुलम् ।
मृगपक्षिगणाकीर्णं नानापादपशोभितम् ॥ ८३ ॥
कचिदंसे समारोप्य कचिद्वाहेऽथ कुञ्जरे ।
सुकुमारममुं बालं पर्यटामो वनान्तरम् ॥ ८४ ॥
हनिष्यामो बहूंस्तत्र हरिणाञ्शशकांस्तथा ।
शिक्षिताप्यस्त्रविद्येयं सफला मनुजेश्वर ॥ ८५ ॥
विधायात्यद्भुतां लीलां दर्शयित्वास्य तद्वनम् ।
शीघ्रमेवागमिष्यामो(मः) कुरुष्वाज्ञां नरोत्तम ॥ ८६ ॥
इति तेषां वचः श्रुत्वा प्रत्युवाच नराधिपः ।
तद्वियोगासहिष्णुस्तच्चिन्तयोद्वेगमानसः ॥ ८७ ॥
कर्तुमाखेटकं सर्वे भवन्तो बलशालिनः ।
प्रियां तु किंतु बालोऽयं कोमनाङ्गि न वेत्ति तम्(?) ॥ ८८ ॥
संभवन्ति वने दोष(षा) बहुषे(शो) द्द(दु)ष्टसत्र्यु(शत्रु)जाः ।
सोढुं तद्दर्शनोद्भूतं न शक्तो बालको भयम् ॥ ८९ ॥
अथवा सुकुमाराङ्गं सुतमेनं विना क्षणम् ।
सुन्दरं भवसर्वस्वं स्थातुं नैव धृतिर्मम ॥ ९० ॥
समाकर्ण्याथ तद्वाक्यं विमर्षाकुलिताशयः ।
बद्धाञ्जलिपुटाः सर्वे जगदुस्ते शनैः शनैः ॥ ९१ ॥
तावन्नास्ति भयं किंचित्सिंहव्याघ्रादिकं कचित् ।
भवामि जीतिता(?) यावन्न शङ्कां कर्तुमर्हसि ॥ ९२ ॥
चकाराज्ञां नृपः कर्तुं मृगयां पुत्रवत्सलः ।
योसोभा(यूसुफा)ख्येन तेनैव सहैव सरलाशयः ॥ ९३ ॥
अनुज्ञां प्राप्य ते दुष्टधियो दुष्टाशयः(याः) परम् ।
संपन्नमिव मन्नं तम(द)मन्यन्त पुरा कृतम् ॥ ९४ ॥

इति यवनभाषापारंगमपण्डितश्रीवरविरचिते कथाकौतुके नवमं कौतुकम् ।

---

दशम कौतुकम्।

धिग्दैवं कृपणं कर्तुं द्वयं येनैव शक्तिमान्।
दुःखितं सुखसंयुक्तं सुखितं च सदा सुखम्॥ १॥

वैदग्ध्ये किं विधेः कूपे प्रक्षिप्ये वातिसुन्दरम्।
योसोभा(यूसुफा)ख्यं सुखं(तं) नास्य भ्रातरो येन्न योजिताः॥ २॥

ततस्तदाज्ञयादाय भ्रातरं तं यवीयसम्।
कर्तुमाखेटकं सर्वे निर्ययुर्नगराद्बहिः॥ ३॥
लालयन्तोऽपि भूपाग्रे बलं बलवतां वराः।
यथा बलमती राजा बलात्कारं नवेत्त्ययम्॥ ४॥
कश्चिदंशे समारोप्य तमेवं प्रियदर्शनम्।
अविज्ञाताशयं तेषां गन्तुकामोऽभवत्तदा॥ ५॥
कश्चिदेनं समालिङ्ग्य चुचुम्ब वदनं शनैः।
पश्यतो जनकस्याग्रे वितन्वंस्तामुदं मुधा(ताः)॥ ६॥
प्रकटं स्नेहसंयुक्ता अन्तःक्रोधपरायणाः।
जय जीवेति बहुशः प्रयुञ्जानाः सदाशिषः॥ ७॥
एवं मायामयैर्भावैर्मोहयित्वा नराधिपम्।
निन्युस्ते दूरसंधानं निर्जनं दुर्जनाः परम्॥ ८॥
ततः स्कन्धादवारुह्य पदातिं विरचय्य तम्।
स्नेहार्द्रं हृदयं त्यक्त्वा दुर्वचोभिस(र)मन्दयन्॥ ९॥
तीक्ष्णकण्टकिना दुष्टमार्गेण बुद्धमत्सराः।
पद्मापद्मोपमाभ्यां तमानिन्यु(इ)र्वैरिणस्ततः॥ १०॥
मुष्टिभिः(?) पादपातैस्तं ताडयन्तो मुहुर्मुहुः।
रुदन्तं दीननयनं हसन्तस्ते मुदान्विताः॥ ११॥
सुतस्नेहार्द्रहृदयः परं तं कठिनाशयः।
प्रश्रयावनतो भ्रातस्ते हि वैरपरायणाः॥ १२॥
क्वाद्य ते स पिता येन स्वत्स्नेहान्धधिया परम्।
त्वमेवैकं समाश्रित्य वयं विस्मारितं(ताः) सदा॥ १३॥

त्वामद्यैव हनिष्यामः पितुर्भीतिर्नवास्ति नः।
करिष्यामोऽथवा छिन्नशस्त्रापानादिकं क्रुधः॥ १४॥
एवं स[र्वे] त(न)यन्तस्तं सुकुमारमनागमम्।
आसन्प्रमुदिताः सर्वे मोहिता विष्णुमायया॥ १५॥
इति दृष्ट्वाद्भुतं तेषां मनःकाठिन्यमातुरः।
चिन्तयामास योसोभ(यूसुफ)नामधेयोऽतिदुःखितः॥ १६॥
अहितं विहितं कस्माद्विधिनाविधिना मम।
संहितं निहितं किंवा सौहार्दं सुहृदं परम्॥ १७॥
सुदूरं जनको येन रक्षितोऽहं सुमेधसा।
यत्नेनाथ सुदुःखान्ताः(न्तः) शरणं कं समाश्रये॥ १८॥
कथं मम पिता दूरस्थिते(तो) जानाति दुर्दशाम्।
नास्ति कश्चित्सुहृद्भूत्वा वक्ष्यत्येवं तदग्रतः॥ १९॥
नास्ति स मे बन्धुरिति श्रुतं वाक्यं·········श्रुतौ।
विपरीतं तु तद्यन्मां हन्तुकामाः सहोदराः॥ २०॥
एवं दुःखातुरं बालं रुदन्तं कर्मणा सुर(त)म्।
तमादाय समाजग्मुः कुया(कूपा)न्तिकमनागमम्॥ २१॥
कथयन्ति स तं कूपमन्धकूपमिवापरम्।
सुनिम्नमप्रमेयं पातालतलमाश्रितम्॥ २२॥
घोरमध्योच(च्छ)लद्वायुर्जितमेघध्वनिं परम्।
सदा गुल्मलताकीर्णं प्रसर्पत्सर्पसंकुलम्॥ २३॥
ततो दृढतरं बध्वा बन्धनं तैर्नृपात्मजम्।
अंशुकानि समाहृत्य संत्व(तु)ष्टास्तत्र चिक्षिपुः॥ २४॥
सं(तं) तु तत्तेजसा कूप(पं) प्रजु(ज)ज्वाल समन्ततः।
निरालोकेऽपि संदर्शः सप्रकाशोऽभवत्सदा॥ २५॥
तेजस्तेजस्विनां जातु कुत्रचिन्नैव हन्यते।
उदयन्तं विवस्वन्तं बाधते किं निशातमः॥ २६॥

तस्मिन्क्षणे महेशानमगतीनां गतिं परम् ।
सोऽथ सस्मार योसोभ(यूसुफ)नामधेयोऽतिकातरः ॥ २७ ॥
पिता माता सुहृद्भ्राता न चान्ये बान्धवो यदा ।
*समर्थी(र्थो) रक्षितुं नाथ तदा नाथेश्वरो भवान्* ॥ २८ ॥
ततः सर्वेश्वरः शंभुः प्रसन्नजनवत्सलः ।
विधायैकशिलामटं(?) तन्मध्ये मायया विभुः ॥ २९ ॥
अरक्षत्सहसालोक्य पतन्तं तं हि(नि)राश्रयम् ।
अप्रमेयानुभावोऽसौ कर्तुं किं नैव शक्तिमान् ॥ ३० ॥
तेनैव प्रेषितस्तावद्गृहीत्वैकं सकञ्चुकम् ।
पूर्वोक्तदेवदूतोऽथ समागत्याब्रवीद्वचः ॥ ३१ ॥
उत्तिष्ठोत्तिष्ठ भद्रं ते बध्वेदं देवकञ्चुकम् ।
मृत्युभीतिः क्षुधा तृष्णा नहि त्वां बाधते क्वचित् ॥ ३२ ॥
मुञ्च मुञ्चाधुना चिन्तां प्रसन्नस्ते महेश्वरः ।
रक्षितोऽसि स्वयं तेन दीनानुग्रहकारिणा ॥ ३३ ॥
यथेदं सुमहत्पुण्यं त्वयाप्तं दुष्टयोगतः ।
तथाल्पैरेव दिवसैः सुखं प्राप्स्यसि शाश्वतम् ॥ ३४ ॥
धीरो भव महाबुद्धे दैन्यं मा नय मानसम् ।
जित्वा शत्रून्सुधर्मेण राजावश्यं भविष्यसि ॥ ३५ ॥
इत्युक्त्वान्तर्हिते तस्मिन्देवदूते स बुद्धिमान् ।
ध्यायन्मनसि देवेशं तस्थौ तत्र नृपात्मजः ॥ ३६ ॥
दिवसत्रितये सोऽभूज्जपेऽखिललोकचन्द्रमाः ।
*नाथभाख्ये पुरे रम्ये यथा बुध्या विनिर्मितः* ॥ ३७ ॥
चतुर्थेऽहनि भूपालनयनानन्दकारकः ।
ततः समुद्द(द्धृ)तो बालः प्रभुणाद्भुतकारिणा ॥ ३८ ॥
देवाज्ञयाथ तद्भाग्ये वचनेऽपि समागतः ।
जलार्थं लोकमा(सा)र्थस्तं कूपमन्वेषयंस्ततः ॥ ३९ ॥

सार्थो विस्मृतमार्गोऽसौ क्षुत्पिपासोप्र(प)पीडितः ।
बद्धः स विपिने तस्मिन्विचिन्वंस्तमितस्ततः ॥ ४० ॥
तावत्स संगतस्तस्य प्रथितो वरुणाख्यया ।
वैज्राभिधानस्तेनासौ समानीतस्तदन्तिकम् ॥ ४१ ॥
स तेन सहितो याव(त्) कूपान्तिकमुपागमत् ।
तावद्रू(द्रू)पात्मजस्यापि देवदूतः समागतः ॥ ४२ ॥
ततो जगाद शनकैरुचिष्ठोत्तिष्ठ भारत ।
भाग्यं ते फलितं साधो त्यज चिन्तां सुदुस्त्यजाम् ॥ ४३ ॥
वैनं चर्मपुटं क्षिप्त्वा समुद्र(द्ध)रति कूपतः ।
तदन्तरे त्वया स्थेयं तूर्णं तद्धारसंयुतम् ॥ ४४ ॥
ततोऽसौ ते समुद्धर्ता ज्ञात्वा पूर्णं जलेन तत् ।
अभिधाय गते तस्मिन्यथास्थानं नृपात्मजः ॥ ४५ ॥
प्रतीक्षमाणः समयमासीद्बद्धमनोरथः ।
क्षिप्तं चर्मपुटं तावज्जलोद्धरणवाञ्छया ॥ ४६ ॥
केनापि सार्थनासौन्य(?)विशचन्न च सत्वरम् ।
नितरां गुरु तज्ज्ञात्वा समर्था न चरस्तदा ॥ ४७ ॥
अस्ति चर्मपुटं भारयुतं किमपि सांप्रतम् ।
तदेतन्मध्यगं किंचिद्दुर्लभं वस्तु मन्यते ॥ ४८ ॥
एवमानिन्दितः कर्षञ्शनैस्तद्रूपतस्ततः ।
शिशुमेकं ददर्शासौ कूपातिचयशालिनम् ॥ ४९ ॥
कूपमं(सं) तस्मानेन विधिना कर्षितः शनैः ।
स शिशुः शुशुभे कुम्भस्थितो बालशशी यथा ।
अद्भुतं बालकं तूर्णं संतुष्टा(संतुष्टः) सोऽपि सेवकः ॥ ५० ॥
समानीयाग्रत(तः सा)स्सार्थपतयेऽदर्शयत्ततः ।
समालोक्याथ तं बालं सोऽभूत्परमविस्मितः ॥ ५१ ॥

१. 'बज्रईलनामा यवनदेवदूतविशेषः' इति यवनशास्त्रान्तर्गतयूसुफजुलेखा.
२. जलम्.

तथैव सार्थलोकौघो विमर्षमकरोत्परम् ।
कोऽयं कस्यात्मजा(जः) कूपे केनैवायं ति(नि)पातितः ॥ ५२ ॥
इति कोलाहलपरः समा(सा)र्थोऽभूत्समन्ततः ।
तस्य ते भ्रातरस्तावन्मृगयानिरता वने ॥ ५३ ॥
श्रुत्वा ध्वनिं पुनर्घोरं कूपान्तिकमुपागताः ।
दृष्ट्वातिविपुलं सार्थं तत्र कूपात्समन्ततम् ॥ ५४ ॥
स्तुवन्तो विधिवैचित्र्यं तत्रासंस्थे(स्ते) सुविस्मिताः ।
प्रोचुः सार्थपतिं क्रुद्धाः कूपात्केनायमुद्धृतः ॥ ५५ ॥
अस्माभिर्निहितोऽप्यत्र वध्यः पापरतः परम् ।
मत्तान्सार्थं चु(र्थच)रो भीतः पप्रच्छ विनयान्वितः ॥ ५६ ॥
भवद्भिरपनोर्थेन(?) केन क्षिप्तोऽत्र बालकः ।
प्रत्यूचुस्ते महात्मानं पापिनो नृपनन्दनाः ॥ ५७ ॥
अस्माकमासीद्दासोऽयं दासाज्ञाभङ्गकारकः ।
तेनायमपराधेन[1] क्षिप्तोऽमुष्मिन्स संकटे ॥ ५८ ॥
अस्माभिर्भवता कार्यं विहितं यत्समुद्धृतः ।
वधोपायः सदास्माभिः ऋधासो(?) विहितः क्वचित् ॥ ५९ ॥
फलितो न कथं वध्यः स हि यो दैवरक्षितः ।
हनिष्यामोऽथ चेद्दोषाद्धुतकं किं फलं ततः ॥ ६० ॥
विक्रीतमस्त्यमुं दासं साभिलाषं मनोऽद्य नः ।
इति सार्थपतिः श्रुत्वा कुमारं तं सुलोचनम् ॥ ६१ ॥
क्रीत्वा तेल्योपवित्तेन[2] चक्रे स्वात्मवशं ततः ।
तदर्धं स तु एकोभ(याकूब)नामा वेत्ति स नापरः ॥ ६२ ॥
आसीदेकैव सा योग्याग्रहीत्तं तं नृपात्मजा ।
गृहीतो याद्धुतं दासं शुभलक्षणसंयुतम् ॥ ६३ ॥

---

१. 'राधेन' इति स्यात्. २. 'तेभ्योऽल्पवि-' इति स्यात्.

ततः सार्थपतिर्मेरुं प्रत्यागाद्धर्मपूरितः ।
ततः कतिपयाहोभिः प्राप्तस्तु नगरान्तिकम् ॥ ६४ ॥
श्रिया परमया युक्तः प्रथितः सार्थनायकः ।
तदुत्तरं समाकर्ण्य मन्त्री मेरुमहीभुजा ॥ ६५ ॥
सभाजनाय प्रहितस्तत्समीपमुपागतः ।
सभाजयित्वा तं सार्थपतिं तदनुगांस्तदा ॥ ६६ ॥
तेनैव सहितोऽजेजमे(जीजमि)स्तोऽसौ निविशत्पु(पु)रम् ।
पप्रच्छानामयं सार्थनाथं मित्रं यथा सुहृत् ॥ ६७ ॥
दिष्ट्याद्य कुशली प्राप्तः परं प्रेमनिधिर्भवेत् ।
कथयस्व सखे वस्तु किमत्रापहृतं त्वया ॥ ६८ ॥
भवतस्तन्मया सर्वं गृह्यते साधुऽसा(ध्वसा)धु वा ।
तस्य तद्वचनं श्रुत्वा प्राह सार्थपतिस्ततः ॥ ६९ ॥
मया नीतानि दिश्यानि राजन्पगत्यनी(न्यद्याप्यने)कशः(?) ।
तथाप्येको मया दासः क्रीता(तो)ऽतिविपुलैर्धनैः ॥ ७० ॥
कू(रू)पेणाप्रतिमो लोके लोकनाथसमाहृतः ।
परं तमेकं मन्येऽहं नररत्नं नराधिप ॥ ७१ ॥
न तथा जायते प्रीतिर्निधिलाभेन देहिनाम् ।
कलकोकिलनादेन न शारदसुधांशुना ॥ ७२ ॥
असमञ्जसवाक्येन शिशोर्मृगमदेन च ।
नापि स्वर्गाधिपत्येन दर्शनेनास्य सा यथा ॥ ७३ ॥
तन्मुग्धमधुरालापस्मित(?)सावीक्षणादिभिः ।
तेनेदं मोहितं सर्वं कुहकेनेव मायया ॥ ७४ ॥
एकस्यैव तदीयस्य चञ्चन्नेत्रेक्षणस्य च ।
अचला सकला मूल्यं स्वल्पं भूपाल मन्यते ॥ ७५ ॥
इति श्रुत्वाद्भुतं सम्यक्तस्य रूपनिरूपणम् ।
तच्चित्तोऽजेजमे(जीजमि)स्त्र तं विससर्ज निजालयम् ॥ ७६ ॥

१. अत्र च समासान्तविधेरनित्यत्वाट्टजभावो बोध्यः, 'कतिपयाहैश्च' इति पाठकल्पनं वा.

समेत्यायतनं सार्थपतिर्भृत्यं महामतिः।
क्रीतं स्वद्रविणेनैतं प्रोवाच वचनं ततः ॥ ७७ ॥
अभ्युत्तिष्ठ महाभाग परं स्नानादिकर्मणा।
नय शोभां शरीरं स्वं सत्वरं धूलिधूसरम् ॥ ७८ ॥
ततो नीलाभिधानां तां नदीमेत्यावगाहयन्।
प्रसादयामास वपुः सुकुमारस्पदाज्ञया ॥ ७९ ॥
किंतु नीरजहीनापि तन्मुखाम्भोजशोभया।
परं तदैव शुशुभे सापगा वेपशालिनी ॥ ८० ॥
तेनावगाहिता शुद्धवपुषा भ्रमताम्भसि।
राजहंसोपमेनापि राजपुत्रेण सा बभौ ॥ ८१ ॥
अवगाहं ततः कृत्वा नीरार्ता(ची)रमुपागतः।
दिव्याम्बरधरो रेजे सुकुमारोऽतिशोभनः ॥ ८२ ॥
शरीरं भूषयित्वा तु सत्वरं भूषणोत्तमैः।
समागत्य ततः सार्थपतये प्रणनाम सः ॥ ८३ ॥
सोऽप्यमुं सुन्दरतरं समालोक्य मनो दधे।
गृहीतं स्वल्पवित्तेन विक्रीतं बहुभिर्धनैः ॥ ८४ ॥
अथ मात(सार्थ)पतिः सम्यग्व्यवहारविचक्षणः।
मञ्चे निधाय तं मे(मि)स्नभूपान्तिकमुपानयत् ॥ ८५ ॥
सोऽपि तं प्रेमहर्षेण तस्मै नीत्वान्तिकं पुनः।
तस्मादाकृष्य तस्यैवं तस्मिल्लोके शुभं वपुः ॥ ८६ ॥
दर्शयामास मेधावी स्वार्थसाधनतत्परः।
प्रश्रयावनतो भूत्वा रूपेणाप्रतिमो भुवि ॥ ८७ ॥
पृथुकं निर्गतं मञ्चात्(?) पारं तेजोन्वितं शुभम्।
अमन्यत महीपालो द्वितीयमिव भास्करम् ॥ ८८ ॥
दृष्ट्वैव तं तथा भूपं प्रियमद्भुतदर्शनम्।
आसन्प्रमुदिताः सर्वे विस्मयाविष्टमानसाः ॥ ८९ ॥

तावत्सर्वं चरित्रं तत्सुरूपस्य स जन्मतः ।
तस्यैव तज्जनोद्गीतं प्रादुर्भूतं समन्ततः ॥ ९० ॥
तन्नामतद्गुणाख्यानतत्कथाबद्धमानसः ।
तन्मयत्वमवापन्ना आसंस्तत्पुरवासिनः ॥ ९१ ॥
आलेख्येऽपि लिखित्वामुं केचित्पश्यन्ततत्तमम् (?) ।
ध्यानेनान्ये मनोमध्ये सदाहितधियः परम् ॥ ९२ ॥

इति यवनशास्त्रपारगमपण्डितश्रीवरविरचिते कथाकौतुके दशमं कौतुकम् ।

---

एकादशं कौतुकम् ।

कर्तुं यत्र कचिच्छक्ताः सर्वदै(दे)वा[:] सवासवाः ।
विधाता संविधाता तद्वे(द्वे)ल्यैव निरङ्कुशः ॥ १ ॥
एवं वर्त(वृत्तं) समावृत्तं यावत्तस्य शिशोर्महत् ।
तत्कर्मण्यनभिज्ञासीत्तावत्सा पार्थिवात्मजा ॥ २ ॥
तद्वियोगेन सा बाला त्यक्तवस्त्रा मनोरमा ।
नित्यमुन्मत्तरूपासीद्भ्रमन्तीव वनाद्वनम् ॥ ३ ॥
एकदागत्य भूपालतनया नगरान्तिकम् ।
यावत्प्रतिष्ठा शुश्राव महत्कोलाहलं नृणाम् ॥ ४ ॥
ततो विस्मयमापन्ना हरिणीहारिलोचना ।
किमेतदिति पप्रच्छ सखीवृन्दं मुहुर्मुहुः ॥ ५ ॥
काचित्तदाज्ञया तूर्णं गता प्रासादिका परम् ।
प्रष्टतं(पृष्ट्वा त)दखिलं वृत्तं श्रुत्वा याता पुनस्ततः ॥ ६ ॥
समेत्य कथयामास यथावत्सर्वमादितः ।
दासीदासचरित्रं तन्मनःसंतोषकारणम् ॥ ७ ॥
समाकर्ण्यैव किं नाम किंचिल्लब्धसुखावला ।
व्यसृजत्तं समानेतुं शिशुं सहचरीं पुनः ॥ ८ ॥
समानीय ततो बालं तमेकं प्रियदर्शनम् ।
अपश्यत्सा स्वयं कान्तं मध्येकर्णेरथस्थितः ॥ ९ ॥

तं विलोक्य ततोऽपूर्वरूपलावण्यशालिनम्।
बभूवानन्दिता भूपतनया तत्क्षणात्परम्॥ १०॥
तद्दर्शनाद्वियोगोऽर्थमानिनी विजहौ शुचम्।
अमन्यत तदैवैकं सफलं जन्मवासरम्॥ ११॥
चितुं(?)चैतन्यसंयुक्तं ज्ञात्वा चिन्तापराभवत्।
शुभाशुभफलावाप्तिसाक्षीभूतं मनो नृणाम्॥ १२॥
किंवा सोऽयं मया दृष्टः स्वप्ने यो लोकसुन्दरः।
तं विना दयितं स्वास्थ्यं मनो मे कथमाप्नुयात्॥ १३॥
क्षणमेकं विमृश्यैवमत्यजच्छ्वाससंततिम्।
नवोद्भु(द्भू)तवियोगो(गा) वा निःसंज्ञा सापतद्भुवि॥ १४॥
तावत्सार्थपतिर्भृत्यं निनाय निजमन्दिरम्।
दर्शयित्वैव तत्पापा(?)हृतचित्तं पुरौकसाम्॥ १५॥
ततोऽपश्यद्विशालाक्षीं धात्री राजसुतां शनैः।
दशामपूर्वदृष्टा(ष्टां) तामवलोक्याकुला भया॥ १६॥
अहो किंचित्क्षणं सौख्यमद्यैवापि गतं त्वया।
दर्शनाद्बालकस्यास्य तावन्मूर्छामुपागता॥ १७॥
किं शोकाम्बुधिमग्नासि वद सुन्दरि सत्वरम्।
इति तस्य वचः श्रुत्वा प्रत्युवाच मनस्विनी॥ १८॥
जानेऽहानि गतान्येवं मातर्दुःखमयान्यपि।
अधुनानन्दयुक्तानि प्रतिभान्त्येव तानि मे॥ १९॥
योऽयं सार्थपतेर्दासो मेस्त्रे(मिस्रे)ऽस्मिन्वीक्षितस्त्वया।
जीवितेशो मया स्वप्ने स एवालोकितः पुरः॥ २०॥
नित्यमेतद्वियोगाग्निज्वलि(ज्वाल)या ज्वा(ज्व)लितास्म्यहम्।
विद्ध्यमुं भवसर्वस्वं मम मातः सुदुर्लभम्॥ २१॥
दर्शयित्वा निजं रूपं तदालोकमनोरमम्।
हृतं चैतन्यमखिलं हेलयैव ममाधुना॥ २२॥

न जाने माययानेन कयाप्युन्मत्तरूपताम्।
नीत्वा मां सर्वबन्धुभ्यः कथं दूरीकृताप्यहम्॥ २३॥
यत्किंचित्सततं कष्टं मम मातर्निरीक्षितम्।
एतदर्थं मया सर्वं तदासं प्रेमलुब्धया॥ २४॥
अवेहि परमं लाभं वाञ्छितं सर्वथाधुना।
यदि सर्वगुणोपेतः प्राप्यतेऽयं स्वरूपवान्॥ २५॥
नैतज्जाने कथं कार्यं मम सिद्धिमुपेष्यति।
लभ्यते वा कथं नाथो यतोऽसौ दृष्टिगोचरम्॥ २६॥
अमुमासाद्य रेमेण(?) रमत्येव सुमध्यमा।
नैतज्जानाम्यहं मातः प्राप्तपुण्योदयाधुना॥ २७॥
का वा सुलोचना रम्यं विशल्येतत्स्तनान्तरम्।
धन्या का तन्मुखं नित्यं मदालसविलम्बनम्॥ २८॥
पश्यन्बिम्बाधरं जन्म नयत्येव कृतार्थताम्।
धन्या का कामिनी सौधे शीतांशुकरशीतले॥ २९॥
अनेन परमं सौख्यं ममाप्नोति महाधुना (?)।
इति ब्रुवाणां तां बालां विरहोत्कण्ठिताशयम्॥ ३०॥
प्रत्युवाच शनैर्धात्री मानयन्नथ मानिनी।
क्षमस्वाद्य पुनः पुत्री कंचित्कालं यथा पुरा॥ ३१॥
अनायासेन सिद्ध्यन्ति क्षमाशीलस्य सिद्धयः।
क्षमया लभ्यते सर्वं यत्किंचिन्मनसेप्सितम्॥ ३२॥
नित्यं प्रमुदितो लोकः क्षमावानुन्नताशयः।
सहनान्नापरं किंचिद्भूषणं भुवि भाविनाम्॥ ३३॥
क्षमया पूजिता लोके तयैवोदेति भास्करः।
स्वश्रेणिस्वर्गनिःश्रेणिः(?) कविभिः सैव कीर्तिता॥ ३४॥
तस्मिंस्त्व(सात्त्व)यापि क्षन्तव्यं सुभ्रु मद्वचनाद्विधि(?)।
अनयैवाखिलं कार्यं सत्वरं साधयिष्यति॥ ३५॥

इति तद्वचनं श्रुत्वा राजा(ज)पुत्री मुदान्विता ।
मतिमाना(न)विशङ्केहं दयितं हस्तसश्रि(संश्र)यम् ॥ ३६ ॥
स एव समयः पूज्यो वरं तानि दिता(दिना)न्यपि ।
यत्रानन्दी सुहृन्मित्र(?) सामीप्येन सदा भवेत् ॥ ३७ ॥
प्रियप्रेमाथ दीपोऽसौ यदि प्रज्वलितः सदा ।
विप्रयोगतमो नैव बाधते नयनं क्वचित् ॥ ३८ ॥
अन्ये च रथसार्थे यः समनीया पणान्तरे(?) ।
विक्रि(क्र)यार्थं ततो दासं महार्घं तस्य चाकरोत् ॥ ३९ ॥
ततो वृत्तं समाकर्ण्य सर्वे ते पुरवासिनः ।
धनान्यादाय तं दासं गृहीतं तूर्णमाययुः ॥ ४० ॥
श्रुतमत्यद्भुतं वृत्तं समाजे पुरवासिन(ना)म् ।
त्वगस्थिशेषापि परं कुब्जाकारातिदुर्लभा ॥ ४१ ॥
योषिद्वृद्धापि तत्रैका तद्गुणावर्जिताशया ।
दासं क्रीतं(?)मनुप्राप्ता गृहीत्वा सूत्रवर्तिकम् ॥ ४२ ॥
मयायं गृह्यते दास इत्युक्तेऽपि तया जनान् ।
हसतः प्रत्युवाचेदं मच्छ्रद्धागद्गदाक्षरम् ॥ ४३ ॥
महार्घं प्रथितं लोके क्रीतं नैव क्षमास्म्यहम् ।
अयमेव हि मे लाभो यद्गृहीतुमुपागता ॥ ४४ ॥
तावत्सार्थपतिस्तस्य पुरग्रामकरादिषु ।
दुन्दुभिस्ताडयामास विक्रि(क्र)यार्थं सुजन्मनः ॥ ४५ ॥
यः कश्चिद्धनवान्दासं क्रीतुकामो भवेदस(मु)म् ।
स हि गृह्णाति त्वरितं समागत्यातिसुन्दरम् ॥ ४६ ॥
गृहे तत्सदृशं कश्चिरसकले लोकमण्डले ।
समभून्नभविता रूपसंपदा सुमनोहरः ॥ ४७ ॥
श्रुत्वा दुन्दुभिनादं तं सदा मानधनोर्जितः ।
महाजनाः समाजग्मुः क्रीतुं दासं(सं) तदद्भुतम् ॥ ४८ ॥

जपा(?)न्मे कोऽवदन्मूल्यं भद्रमेकं प्रदीयते ।
मयासै तेन दासोऽयं गृह्यते लोकसुन्दरः ॥ ८९ ॥
भद्रं तत्कथितं नूनं यत्र संख्याविचक्षणैः ।
सहस्रमेकं सौवर्णमुद्राणां परिकीर्तितम् ॥ ९० ॥
तावता स वणिक्कज्ञो(?) नैव मूलेन दत्तवान् ।
तत्तमर्घं तव दासं क्षमातिशयशालिनम् ॥ ९१ ॥
ततस्तद्विगुणं मूल्यमपरेये(भ्यो) ददौ वणिक् ।
नाङ्गीचकार तत्किंचित्स्वार्थसाधनतत्परः ॥ ९२ ॥
एवं त्रिगुणं कश्चिदव(दा)त्कश्चिच्चतुर्गुणम् ।
एवं कृत्वा शतगुणं तन्मूल्यमभवत्तदा ॥ ९३ ॥
सहस्रकोटिगुणितं वृद्धिमूल्यमुपागमत् ।
तावतापि न तं दासं दत्तवान्स वणिक्पतिः ॥ ९४ ॥
अथ नागरिकाः सर्वे सह मे(मि)त्रमहीभुजा ।
तदा हि तु गुदांशांतां(?) विविशुः स्व(स्वं) स्वमालयम् ॥९५॥
एवं वृत्तं समाकर्ण्य मे(मि)त्रभूपालमन्त्रिणः ।
दयितापि गतार्थाभूदेकैव वरवर्णिनी ॥ ९६ ॥
हत्वा चिरंतनं चिन्ता तन्निदेशे वशं सदा ।
हर्ष(र्षे)णाजेजमे(जीजमि)त्रं ते(तं) समाहूयाब्रवे(वी)द्वचः ९७
गत्वा शीघ्रं महीभर्तुः समीपं विनयान्वितः ।
दत्त्वा जानुद्वयं भूमौ विज्ञप्तिं कुरु सत्वरम् ॥ ९८ ॥
निःप्रजोऽहमसौ भूयात्पुत्रो मे तव सेवकः ।
इत्याज्ञा यदि ते दासो गृह्यते वनि(णि)जो मया ॥ ९९ ॥
अनु(न्व)हं प्राप्य भूभर्तस्तदा सार्थपतिं वद ।
उत्तमार्घो मया दासो गृह्यते भवतोऽधुना ॥ १०० ॥
यावत्प्रार्थयिता मूल्यं स वणिक्स्वार्थतत्परः ।
तावदेवं प्रदातव्यं द्विगुणं वापि सत्वरम् ॥ १०१ ॥

विदु(?)चिन्ता न कर्तव्या कोशेऽस्मिन्नथ मामके।
सन्ति रत्नान्यसंख्यानि यथा तारा नभस्तले ॥ ६२ ॥
यद्यहं दीयता(?) तेऽस्मिन्भवान्प्रियहिते रतः।
समचित्तविनोदार्थं दासं तं शीघ्रमानय ॥ ६३ ॥
प्राप्त(प्ते)ऽमुष्मिन्मया दासे मनःसंतोषकारके।
सफलं मन्यते जन्म चिन्ताविरहितं तदा ॥ ६४ ॥
तथेति प्रतिश्रुत्यासौ संदेशं हरिणीदृशः।
तदा भाषणसंतुष्टः सर्वं चक्रे समाहितः ॥ ६५ ॥
अथ सार्थय(प)तेर्दासं गृहीत्वा विपुलैर्धनैः।
सुभ्रुवोऽग्रे समानीय स्थापयामास सुन्दरम् ॥ ६६ ॥
तंतु(रन्तु)क्रामोपसंवीक्ष्य प्राप्तकामा मनस्विनी।
हर्षबाष्पौघपूर्णाक्षी विमर्षमकरोत्तदा ॥ ६७ ॥
अहो किं स्वप्नमायेयं किं वा सत्यमिदं भवेत्।
यत्पश्याम्यधुना लोके दुर्लभं प्रियदर्शनम् ॥ ६८ ॥
आशा मन्मानसे नैव सासीद्विरहयामिनी।
प्राप्नोति दीर्घतां याता प्रियमित्रोदयं क्वचित् ॥ ६९ ॥
अकस्मात्सुखिता कान्तप्राप्त्या जातास्मि सांप्रतम्।
शोभते विधिना साम्यं कर्तुं चेन्मानसं मम ॥ ७० ॥
मां विना नापरा काचिद्दुःखिता संसृतेः परा।
अधुना सुखसंसक्ता प्राप्तकामापि कामिनी ॥ ७१ ॥
चिन्तां तीक्ष्णां सुसंतप्ते विप्रयोगमरुस्थले।
पिपासिताप्यहं तत्र भ्रमन्ती गतचेतना ॥ ७२ ॥
आश्चर्यकारिणी नित्यं हततृष्णा दयालुना।
प्रियप्राप्तिसुधावृष्ट्या दिष्ट्याद्य विधिना कृता ॥ ७३ ॥
निर्जनेऽपि निरालोके स्मितया प्रति सांप्रतम्।
दैवं भाग्योदयो नापि प्राप्ते ज्योतिर्मया कृतम् ॥ ७४ ॥

मृत्युश्रियां(यं) समाश्रित्य जाताहं निर्ह्रिया भृशम् ।
न जाने केन पुण्येन पुनर्दैवेन बोधिता ॥ ७५ ॥
जीयात्सार्थपतिर्भूयात्तथा लाभान्वितास्सदा(?) ।
विक्रि(क्र)यार्थमिहानीतो दासोऽयं येन रूपवान् ॥ ७६ ॥
कां(का) क्षतिश्चेन्मया दासो विक्रीतो बहुभिर्धनैः ।
वित्तं तद्धनिनां प्रोक्तं यत्स्यात्मार्थे प्रयुज्यते ॥ ७७ ॥
रक्षन्ति सततं रागहीना विचादिकं परम् ।
शरीरं द्रविणं सर्वं प्रियार्थं भुवि रागिणाम् ॥ ७८ ॥
धिक्कांल्लोभान्धधिषणान्निन्द्याञ्जगति मानवान् ।
धनमेव प्रियं येषां न सुहृत्प्रीतिभाजनम् ॥ ७९ ॥
एवं विस्मयमापन्ना हर्षोत्फुल्लविलोचना ।
अमन्यत परं सौख्यं तदा सा नृपकन्यका ॥ ८० ॥
प्रीत्यैव तन्मुखाम्भोजं पश्यन्मुहुरुपागमत् ।
मूर्छा तत्संगमाह्लादलब्धसंज्ञाभवत्क्वचित् ॥ ८१ ॥
यथाविन्दत सा बाला त्वद्वियोगार्तरा(ता)परा ।
सततं चिन्तयोपेता क्षणमेकं युगोपमम् ॥ ८२ ॥
तथा संप्राप्य दयितं कान्तं कमललोचनम् ।
निमेषमिव हर्षेण वर्षं भूपसुता तदा ॥ ८३ ॥
विश्वं मायामयो भावैर्मोहयन्त्यो विभात्यजः ।
तस्मै नवनवाश्चैव(यैव)(?) विधये विधये नमः ॥ ८४ ॥

इति यवनभाषापारंगमपण्डितश्रीवरविरचिते कथाकौतुक एकादशं कौतुकम् ।

---

द्वादशं कौतुकम् ।

नोदेति रागिणं रागो दर्शनेनैव केवलम् ।
किं स्वयं जायते पुंसां श्रवणेनापि कुत्रचित् ॥ १ ॥
श्रुतिरन्ध्रेण सद्रूपकथा यदि समागता ।
मनः स्वास्थ्यं तनुबलं तदैवोत्कण्ठया हरेत् ॥ २ ॥

नह्यन्यत्कर्म जानाति श्रवणं श्रवणं विना ।
श्रुत्यैव श्रुतवृत्तान्तं हृदयोद्वेगकारणम् ॥ ३ ॥
समयेऽस्मिन्नभूदेका कन्या देयाख्यवंशजा ।
सुकुमारानवद्याङ्गी देशे तस्मिन्सुविश्रुता ॥ ४ ॥
तन्वी पूर्णेन्दुनयना नवयौवनशालिनी ।
मुक्तानुकारदशना पक्वबिम्बाधरा तथा ॥ ५ ॥
मध्येक्षामा स्वनानम्रा संत्रस्ता हरिणीक्षणा ।
श्रोणीभारलसद्वृत्तिर्निम्ननाभिपयोधरा ॥ ६ ॥
आसीच्छीलगुणौदार्ययुता परमसुन्दरी ।
कामं कामपताकेव भाविनी भुवि भामिनी ॥ ७ ॥
नित्यं सौधस्थिता बाला सवयोभिः समन्विता ।
नापश्यदात्मनस्तुल्यं कंचिद्रूपादिभिर्गुणैः ॥ ८ ॥
समाकर्ण्याथ तद्वृत्तं जनोद्गीतं समन्ततः ।
सापि तं द्रष्टुकामाभूदुत्कण्ठाकुलिताशया ॥ ९ ॥
स्थानेऽद्भुतं श्रुतं किंचित्स्तुतं सद्भिर्मुहुर्मुहुः ।
तदेव सहसा द्रष्टुमुत्कण्ठयति मानसम् ॥ १० ॥
भूषयित्वा(?)द(ब)लात्मानं भूषणैः प्रमदोत्तमा ।
परमर्द्धियुता मे(मि)स्रमायया॑ तं निरीक्षितुम् ॥ ११ ॥
सर्वे गृहीतुकामास्तामासन् मे(मि)स्र(प्र)वासिनः ।
नित्यं तद्रूपलावण्यममावर्जितमानसाः ॥ १२ ॥
सहस्रमेकमुष्ट्राणां तथाश्वतरदन्तिनाम् ।
*प्रवालमणिमुक्ताभिः काञ्चनेनापि पूरितम् ॥ १३ ॥*
प्राप्ता तत्र समादाय रूपेणाप्रतिमं भुवि ।
येसोभ(यूसूफ)नामधेयं तं क्रीतुकामापि साभवत् ॥ १४ ॥
नराणामथ नारीणां तदागमनकारणात् ।
सर्वत्र नगरे जातः पुनः कोलाहलो महान् ॥ १५ ॥

पप्रच्छागत्य तद्वार्ता लोकौघं वरवर्णिनी ।
क्रियते स वणिग्दासः कुतोऽयमिति कथ्यताम् ॥ १६ ॥
संप्राप्ते ह्यधुना हित्वा सर्वं बन्धुजनादिकम् ।
श्रिया परमया युक्ता तद्रूपोत्कण्ठिताप्यहम् ॥ १७ ॥
यावत्तं द्रष्टुकामाभूदबला समुपागता ।
यथा तेन जनेनासौ सोऽयमित्येव दर्शितः ॥ १८ ॥
अथ तं प्रथमं वीक्ष्य कान्तं कमललोचनम् ।
अनन्यसदृशो लोके रूपेणासीत्सुविस्मिता ॥ १९ ॥
मूर्छितेवापतद्भूमौ तमपूर्वं विलोक्य सा ।
लब्धसंज्ञाथ शनकैः प्रोवाच मधुराक्षरम् ॥ २० ॥
जाने जन्मसहस्राणि विधाय विधिवत्तपः ।
विधिना निर्मितो नूनं जयन्तो नाम विश्रुतः ॥ २१ ॥
विक्रमेणास्य तनयः कथं दासत्वमाप्नुयात् ।
यद्यन्यदेवसंभूतो भवान्देवसुतः कथम् ॥ २२ ॥
सर्वसौख्ययुतं भूमौ नाकं हित्वावतिष्ठते ।
यदि गन्धर्वतनयः सोऽपि मेयप्रियः सदा ॥ २३ ॥
गौरवेण वचोऽप्येवं वदनाच्छ्रूयते न ते ।
मन्ये मनीषया हित्वा विधाता तत्त्वपञ्चकम् ॥ २४ ॥
शरीरं तद्गुणेनैव रचितं केवलेन ते ।
अथ वा केन तपसा समाराध्य महेश्वरम् ॥ २५ ॥
त्वयासमुत्तमं रूपं येनेदं मोहितं जगत् ।
अयं कस्यापि सद्वंशसमुत्पन्नः श्रियान्वितः ॥ २६ ॥
सुवृत्तः सुगुणानन्दो मुक्तामणिरिवोत्तमः ।
इति तस्या वचः श्रुत्वा प्रत्युवाच महामतिः ॥ २७ ॥
योगीव योगदृष्ट्या तां ज्ञानार्थो बोधयन्निव ।
नास्मिन्देवो न गन्धर्वो नासुरो न च पन्नगः ॥ २८ ॥

पञ्चतत्त्वात्मकं विद्धि शरीरं मामकं शुभे।
नैतच्चित्रं विधे(?)र्लोके वस्तुरत्नान्यनेकशः ॥ २९ ॥
अत्यद्भुतानि सर्वत्र सन्ति केचिन्न तेष्वहम्।
सैवं बुद्धिमतां बुद्धिर्निश्रेयसकरी यया ॥ ३० ॥
ध्यायन्ति सततं शंभुमनन्तं विश्वरूपिणम्।
यदिदं दृश्यते सर्वं नानाकौतुकसंयुतम् ॥ ३१ ॥
तदवै(वे)हि भवादर्शे प्रतिबिम्बमिव स्थितम्।
यथा किंचित्समालोक्य दर्पणे प्रतिबिम्बितम् ॥ ३२ ॥
मनो धावति तत्रैव कर्तुं तद्विनयं मुहुः।
तत्रैव सकलं सुभ्रु जगत्स्थावरजङ्गमम् ॥ ३३ ॥
दृष्ट्वा मायामयं शंभुं ध्यायन्त्येकं मनीषिणाम्।
मानसं चेद्वरारोहे रूपदर्शनलालसम् ॥ ३४ ॥
पश्यैकं मरणं मत्तं हृदि देवे मनोरमम्।
दृष्ट्वैव मामकं रूपं विनश्यत्किं सुखं तव ॥ ३५ ॥
स्थिरं सर्वगतं तस्माच्छुभं सुभ्रु विलोकय।
इति तद्वचनं श्रुत्वा गतमोहेव साभवत् ॥ ३६ ॥
तत्क्षणात्तत्पदाम्भोजं प्रणता(ना)म मुहुर्मुहुः।
ततः सा गजरत्नानि तानि तां संपदां तथा ॥ ३७ ॥
विहायादाय काषायपट्टमेकं सुमध्यमा।
भस्मभूषितसर्वाङ्गा बन्धुस्नेहविवर्जिता ॥ ३८ ॥
प्रव्राजिनीव तपसे जगाम गहनं वनम्।
कृच्छ्रातिकृच्छ्रधारार्कव्रतदूतमनोमला ॥ ३९ ॥
सर्वतीर्थावगाहेन शुद्धदेहाभवत्तदा।
तथा नियमसंयुक्ता साभवद्वरवर्णिनी ॥ ४० ॥
यथा विस्मयमापन्नाः पुरं सर्वे तपोधनाः।
बोधयन्तः स्वमात्मानं श्रुत्वा तद्वृत्तमुत्तमम् ॥ ४१ ॥

स्तुवन्तस्तां वरारोहां तदा सन्मुनिपुंगवाः।
मानसाद्य परं धैर्यं शिखयाम्या मृगीदृशा ॥ ४२ ॥
धीरा नैव दृशं कर्तुं कर्मशक्तः कदाचन।
सा चकार तपो येन जहारेन्द्रबलं महत् ॥ ४३ ॥
न तत्किंचिद्भवेच्छक्तो वक्तुं वर्षशतैरपि।
एवं हि रागिणां रागः कदाचित्सुक्तायते ॥ ४४ ॥
स एव मो(मू)ढमनसां कदाचिद्दुष्कृतायते।
अथ तोम(तैमू)सतनया भाग्यजालं सुविस्तृतम् ॥ ४५ ॥
तदादीर्घगुणं जात दैवाद्धंससुखाश्रयम्।
जगच्छासनपट्टं तन्नामसुद्राङ्कितं परम् ॥ ४६ ॥
तदेव शोभितं सम्यग्बभूवेदं समन्ततः।
अधिगम्यैव तं कान्तं परप्रेमनिधिं तदा ॥ ४७ ॥
रमणी साथ संसारचिन्ताविरहिताभवत्।
गणयित्वाथ हर्षेण तदा वर्षदिनानि च ॥ ४८ ॥
सज्जीकृत्याशु कन्यासु तावन्त्येव मनस्विनी।
नित्यं नवनवं वासो अथयन्मोचयन्नपि ॥ ४९ ॥
अहान्यगमयत्तस्य प्रीत्या परमया तदा।
तथैवाशनपानादिपरिचर्यापरायणा ॥ ५० ॥
तदा सत्यतया बाला निमेषमिव वासरम्।
क्षणं सौधे स्थिता नूनं दयितेन क्षणं समम् ॥ ५१ ॥
बहिरन्तः क्षणं मेने सुखं सा परमं तदा।
अवोचद्वसनं तेन प्रतिमद्धविमोचितम् ॥ ५२ ॥
अयि वासो मया रम्यं किं नाप्तं तावकं वपुः।
तथा सर्वाङ्गमालिङ्गच स्थीयते स्वं यथा त्वया ॥ ५३ ॥
तथा तत्प्रेमलब्धाभूत्सततं सा वराङ्गना।
यथा नैच्छत्क्षणं स्थातुं तं विना शरणं क्वचित् ॥ ५४ ॥

मुञ्चतीदं वपुच्छ(श्छा)या निशीथतमसान्विते ।
तल्लीना तस्य सा नित्यमनुगाभूदहर्निशम् ॥ ९५ ॥
बद्धं यन्मृगशावाक्ष्या सुदृढं प्रेमबन्धनम् ।
तेन शाकं न तद्वक्तुं शक्तो लोकोऽस्ति कश्चन ॥ ९६ ॥
एकदानीय तं बुद्ध्या निशान्त(?)लोकसुन्दरम् ।
अपृच्छज्जनवृत्तान्तं सा तदा भापणोत्सुका ॥ ९७ ॥
स तु तां प्रत्युवाचेदं क(व)चः प्रहसिताननः ।
जन्मवृत्तिं न तां नूनं पितरौ नैव वेद्म्यहम् ॥ ९८ ॥
किंतु जानाम्यहं कूपचरितं परमाद्भुतम् ।
निःप्रकाशे निराहारस्तस्मिन्वासं दिनत्रयम् ॥ ९९ ॥
चतुर्थेऽभ्युद्धृतं तस्माद्वणिजा पुण्यकर्मणा ।
तेनाहं तत्प्रसादेन प्राप्तोऽस्मि पदमुत्तमम् ॥ ६० ॥
तन्मुखादथ श्रुत्वा तद्वचनं कर्कशं भृशम् ।
पुलकाङ्कितसर्वाङ्गा समभूत्प्रमदोत्तमा ॥ ६१ ॥
वेपमाना पतद्भूमौ क्षणात्सा वरवर्णिनी ।
अधिगम्य शनैः संज्ञां शुशोच बहुशो बली ॥ ६२ ॥
विलोक्य तां तथाभूतां पुनश्चिन्तान्वितां तदा ।
स्नेहान्धहृदया धात्री प्रोवाच करुणं वचः ॥ ६३ ॥
अपि किं मानसं सुभ्रु वियोगविधुरं तव ।
चिन्ता ह्येकाग्रचित्ते कामस्ते फलितोऽधुना ॥ ६४ ॥
स्वयं सुन्दरि ते पूर्वं शुष्कपत्रोपमं वपुः ।
आसीद्वियोगवातेन भ्रमितं सर्वतोदिशम् ॥ ६५ ॥
निपतत्स मुखं कापि तथैवाधोमुखं क्वचित् ।
तत्कथंचित्स्थितं दैवात्पुनः प्राप्तं दशान्तत(र)म् ॥ ६६ ॥
किमेतदिति तद्वाक्यं समाकर्ण्य मनस्विनी ।
प्रत्युवाच शनैर्बाला निःश्वसन्ती मुहुर्मुहुः ॥ ६७ ॥

तत्कथं वक्ष्यते मातर्मयात्तं दुःखमुत्तमम्।
धन्या धारयितुं भूमिं मामेकाहमथापि तत् ॥ ६८ ॥
धूलिवत्पतिता भूमौ चिरमासमसंशयम्।
अकस्मात्सांप्रतं चिन्ता चक्रवातेन घूर्णिता ॥ ६९ ॥
कथितं कूपवृत्तान्तं वल्लभं नाम नाधुना।
समाकर्ण्यापि मे काचिद्वृत्तिर्नैवावशिष्यते ॥ ७० ॥
सन्तं मुहुर्मनोमित्रमानसं वेत्ति नापरा।
यात्यस्मिन्सुखिते सौख्यं दुःखं दुःखान्वितेऽपि तम् ॥ ७१ ॥
संबन्धं यन्मनोमित्रविप्रयोगेन(ण) रागिणः।
सत्यं पश्यति तेनासौ गवाक्षेणैव तं मुहुः ॥ ७२ ॥
सत्यं तत्परमं ख्यातं''''मज्जोनलोलयोः (?)।
न शक्यते तथा वक्तुं यथा प्रकृतिजीवयोः ॥ ७३ ॥
न खारिः स्वभुजे यावत्सिरार्थं निहितं मया।
मज्जोनोऽस्य कराद्यावद्बहु सुस्राव शोणितम् ॥ ७४ ॥
प्रकृतिः पीडिता चेत्स्याज्जीवोऽप्येवं यथातुरः।
स यदा चिन्तयोद्भूतः तनुः कार्श्यमुपेत्यलम् ॥ ७५ ॥
यद्रागाढ्यदृढहृदयो नरो वायुसमीरितम्।
तद्वस्त्रात्पतितं रेणुं सहते नैव जातुचित् ॥ ७६ ॥
अनुभूतां पुराणेन क्षयावस्थां कथान्तरे।
कथितामधुना मातः श्रुत्वा दुःखाकुलास्य(स्म्य)तः ॥ ७७ ॥
इति श्रुत्वा वचस्तस्य धात्री प्रोवाच सा वरम्।
सत्यं चिन्तान्वितं चित्तं नित्यं मा कुरु सुन्दरी ॥ ७८ ॥
सदये हृदये धैर्यं धृत्वा हित्वाथ तां पुनः।
चिन्ता तद्वचनाद्बाला जातु(त)हर्षाभवत्तदा ॥ ७९ ॥
तद्रागेना(णा)भवद्भूपसुतानन्दयता क्वचित्।
क्वचिद्दुःखान्वितः किंचित्स साधुर्न विवेद तत् ॥ ८० ॥

इति यवनभाषापारंगमपण्डितश्रीवरविरचिते कथाकौतुके द्वादशं कौतुकम्।

## त्रयोदश कौतुकम्।

स हि धत्ते नृलोकेऽस्मिनात्मारामः परित्रसन्।
हितार्थं हृदयं योषिच्चिन्तासक्तिविवर्जितः ॥ १ ॥
विज्ञाय मानसं तस्य प्रेमहीनं तदाबला।
स्वात्मनोऽपि तथा स्नेहयुतं विस्मयमाप सा ॥ २ ॥
न मया भाषिते किंचिन्मुनिवन्मौनमास्थितः।
निःस्पृहोऽयं नृपसुता किं करोमीत्यचिन्तयत् ॥ ३ ॥
केनोपायेन वशतामानु(न)यिष्याम्यमं(मुं) तदा।
यथो(थै)वायं भवेन्नित्यं मम प्रणयकारकः ॥ ४ ॥
अथैनं दयितं दासं कोशाध्यक्षं करोमि चेत्।
जायन्तेऽस्य ततः सर्वे वैरिणः किं सुखं मम ॥ ५ ॥
किं वा संयोजयाम्येनं कर्मण्यन्यत्र कुत्रचित्।
तदास्य दुर्लभं मन्ये तदासक्तस्य दर्शनम् ॥ ६ ॥
किं तत्स्वल्पं भवेत्कार्यं यस्मिन्संस्थापितः सदा।
प्रयातेव प्रभातेऽसौ सायं प्रत्यागमिष्यति ॥ ७ ॥
पश्याम्येनं यथानित्यं ममैव निकटस्थितः।
यथायमधुना वृद्धिस्तादृशी का विधीयताम् ॥ ८ ॥
बहुधाथ विमृश्यैवं भूपालतनया शुभम्।
ज्ञात्वा तदेव बुध्या तं पशुपालं व्यधात्तदा ॥ ९ ॥
स्थितेऽप्यत्यद्भुते स्नेहं तत्कवि····(?) नियोजनम्।
तस्य सर्वे तिरस्कारममन्यन्त पुरौकसः ॥ १० ॥
योग्यं तस्याभवत्कर्म तदेव हि करोत्यलम्।
पशुभावसमापन्नरक्षां देयांशसंभवाम् ॥ ११ ॥
सर्वदेवशरीरेभ्यः प्रगृह्यांशं पृथक्पृथक्।
विहितो वेधसा सोऽयं पाशुपालेऽभवत्ततः ॥ १२ ॥
समादायाथ मेषादीन्पशूनेवं तदाज्ञया।
निदाघदहनं दावं पालयन्त्यचरत्तदा ॥ १३ ॥

प्रातर्गच्छन्गृहीत्वा तान्सायं प्रत्यानयन्नसौ ।
तदग्रे स्वं वपू रम्यं त्रिसंध्यं दर्शयन्मुदा ॥ १४ ॥
तत्कर्मनिरतो भूत्वा सवयोभिः समन्वितः ।
दिनान्यगमयत्तैस्तैर्विरहैर्वनसंभवैः ॥ १५ ॥
मेषराश्यन्तरस्थोऽसौ बली बलवतां वरः ।
प्रतापोदयदुर्दर्शो रेजे तेजोनिधिर्यथा ॥ १६ ॥
नित्यं तद्दर्शनालापसमुत्कण्ठितमानसा ।
सा यथाभूत्तथैवासौ विरक्तहृदयः परम् ॥ १७ ॥
यथा यथा वीक्ष्यमाणा तदीयाननपङ्कजम् ।
प्रीत्या तथा तथैवायं लज्जानम्रमुखोऽभवत् ॥ १८ ॥
किंचित्कुतूहलेनेयं प्रष्टुकामापि कामिनी ।
यावत्तावन्महाबुद्धिः सोऽपि मौनं समाश्रितः ॥ १९ ॥
यावदुक्ते नितम्बिन्या त्वयाग्रे स्थीयतामिति ।
तावद्भयेन धीरोऽसौ ययौ पश्चाच्छनैः शनैः ॥ २० ॥
यथा तत्प्रेमविवशा सततं साश्रुलोचना ।
तथैव हि महाबुद्धिर्विरक्तोऽसौ सुरूपवान् ॥ २१ ॥
ज्ञात्वाशया तदा रागविहीनं तनुमध्यमा ।
चक्रन्द चिन्तयोद्भूता कुररीव दिवानिशम् ॥ २२ ॥
नावशिष्टं च तत्किंचिद्दुःखं बालमृगीदृशा ।
तया नैवानुभूतं यत्तर्हि योगोत्थितं तदा ॥ २३ ॥
ततः सा विमनस्केव जहारेह प्रसादनम् ।
नाकरोत्केशरचना नाञ्जनं नयनेऽञ्जयत् ॥ २४ ॥
नापि केलिकलां काचित्सखीभिः सहसाकरोत् ।
नित्यं सुमध्यमानल्पविकल्पनिरताभवत् ॥ २५ ॥
इति चिन्तातुरां दृष्ट्वा पुनस्तां हरिणेक्षणीम् ।
स्नेहार्द्रहृदया धात्री प्रोवाच मधुराक्षरम् ॥ २६ ॥

किंतु वाद्य विशालाक्षि मनश्चिन्तान्वितं पुनः ।
कामं कान्तं प्रियं प्राप्य न शोकं कर्तुमर्हसि ॥ २७ ॥
इति तद्वचनं श्रुत्वा भूपालतनयावदत् ।
न तदाप्तं मया मातः सुखं यन्मनसेप्सितम् ॥ २८ ॥
सत्यं वेत्ति जनोऽयं मां प्राप्तकामार्थहारिताम् ।
न तु तन्मानसं ज्ञातुं कः शक्तो वा पराशयम् ॥ २९ ॥
दुर्लभो हि नृलोकेऽस्मिन्नरो नरशिरोमणिः ।
गूढदुःखातुरं सम्यग्वेत्ति यः परमानसम् ॥ ३० ॥
न जाने कर्मणा केन विपरीतेन मे विधिः ।
नित्यं वैरपरो यत्र जातं भग्नोद्यमं मनः ॥ ३१ ॥
कामेनासवरं तावच्चिन्तासीत्केवलोपमे ।
अधुनाधिगते नैव जाता शतगुणाशये ॥ ३२ ॥
न हि शक्ता स्मितां वक्तुं वृथा कान्तवियोगजाम् ।
प्रश्नैरेवंविधैर्मातः पीडया मां मुहुर्मुहुः ॥ ३३ ॥
इत्थं निशम्य तद्वाक्यं तथान्यत्र तयेरितम् ।
गूढार्थमपि तज्जातं प्रकटं जनसंसदि ॥ ३४ ॥
तदन्तं तं समाकर्ण्य तच्छिद्रान्वद्धमानसः ।
जहास भूपतनया तत्रान्तःपुरयोषितः ॥ ३५ ॥
हा धिग्बुद्धिमिमामस्या विपरीतां विमुच्य या ।
कान्तं स्वं भूपतिं दाससमासक्तमनोरथा ॥ ३६ ॥
केयं भूपसुता शुद्धकुला लावण्यशालिनी ।
क्व चाहं भृतको ज्ञातवेशः परवशः सदा ॥ ३७ ॥
अविचार्य कृतं कार्यमनार्यं मुग्धयानया ।
व्यधात्कोऽपि न वामाक्षि प्रत्ययं येन सांप्रतम् ॥ ३८ ॥
इति श्रुत्वापवादं तं सपत्नीभिः समीरितम् ।
दासरूपानभिज्ञाभिः चिन्तामापद्दुरत्ययाम् ॥ ३९ ॥

पुरा लोकापवादेन दुर्निवारेण दूषितः ।
स हि रामो गुणारामः स रामो धर्मतत्परः ॥ ४० ॥
काहं वराका कृपणा निन्द्या जगति नित्यशः ।
किंतु शक्तासि तामद्य बुध्या नाशयितुं तथा ॥ ४१ ॥
विधिरेष विधातव्यो निशान्ते वरया मया ।
पूर्वमाहूयते सर्वा निशान्तवरयोषितः ॥ ४२ ॥
तदग्रे व्यवहारार्थं ततः किंचित्फलादिकम् ।
निधीयतेऽथवानीकरसं भोजनमुत्तमम् ॥ ४३ ॥
ततस्तत्परिचर्यायै भृत्यकोऽयं विसृज्यते ।
दृष्टेऽसिन्योषितः सर्वा यान्ति मोहवशं तथा ॥ ४४ ॥
उपायेनामुना नूनं विहितेन हितेन या ।
आयुषो नाशमायाति भृत्योत्पन्नं ममाखिलम् ॥ ४५ ॥
इति कृत्वा मतिं भूपतनया तत्तथाकरोत् ।
पूर्वमुर्वारुकं क्षाण्या(?) तदग्रे निदधे स्वयम् ॥ ४६ ॥
शकलानि शलाकाभिर्यावत्तानि मृगीदृशः ।
कुर्वन्ति स्म तया तावत्सेवार्थं प्रेषितस्ततः ॥ ४७ ॥
सशरीरमिवानङ्गं तं विलोक्य गतं पुरः ।
मोहिताश्चिच्छिदुस्ताभिः स्वहस्तावेव योषितः ॥ ४८ ॥
तद्व्रणाङ्कानि मोहेन पुरा जातानि यान्यलम् ।
अथ तान्येव हस्तस्थलेखालक्ष्येण लक्ष्यते ॥ ४९ ॥
एवं विसयमापन्नास्तद्रूपाकृष्टमानसाः ।
विजहुः प्रेमसंभूतमयं सौम्यास्तमङ्गनाः ॥ ५० ॥
दर्शंदर्शं यथा नित्यं साभवत्प्रेमविह्वला ।
क्षणमेकं विलोक्यैनं तथैवैताः सुलोचनाः ॥ ५१ ॥
विहायापृथशो बुध्या पुनर्भूपालनन्दिनी ।
तदासक्ताशया बाला समभूत्सा यथा पुरा ॥ ५२ ॥

क्वचित्सद्मनि सौधेऽपि सभायां विजने क्वचित् ।
स तदा दूयमानोऽपि नोपायातस्तदन्तिकम् ॥ ५३ ॥
ज्ञाताशया तदा प्रेमविहीनं तनुमध्यमा ।
बहुशश्चिन्तयामास वशीकर्तुममुं पुरः ॥ ५४ ॥
यथैकं मन्दिरारूढं रचयामासमद्भु(तद्भु)तम् ।
सुचारुकारुभिः कर्म विश्वकर्मानुकारिभिः ॥ ५५ ॥
तदाज्ञया विमुश्या(ष्या)न्यजनालेख्यं मनोरमम् ।
यस्मिंश्चित्रद्वयं चित्रं कृतं चित्रकरैः परम् ॥ ५६ ॥
विरक्तोऽस्याः स योसोभ(यूसुफ)नामधेयोऽतिरूपवान् ।
सा च भूपसुताचार्यपरा तद्विरहातुरा ॥ ५७ ॥
कृत्वा वासगृहं सज्जं तूर्णं तच्चित्रसंयुतम् ।
उपायेनाथ तं तत्र निससर्ज नृपात्मजा ॥ ५८ ॥
किं वावेक्ष्य तदालेख्यं मनो यास्यति मार्दवम् ।
इत्याशया विसृज्यैनं पूर्वं तत्र सुमध्यमा ॥ ५९ ॥
स्वयमप्यागतं पश्चाज्जनैः सा प्रमदोत्तमा ।
अविज्ञाताशयं तस्याः सत्यधर्मपरायणम् ॥ ६० ॥
प्रविष्टं मन्दिरे तस्मिंस्तमेवानुविवेश सा ।
चित्रं दृष्ट्वाद्भुतं तेन स यावद्व्रीडितोऽभवत् ॥ ६१ ॥
विवृत्तवदना तावद्वचो भूपसुताब्रवदत् ।
अयि जीवेश जीवाशा जीवलोके ममापरा ॥ ६२ ॥
काचिन्नैवास्ति कान्तं त्वां विना राजीवलोचनम् ।
अयि प्रणयिनां नित्यं परोपकृतितत्परः ॥ ६३ ॥
वृथा मनोरमं कर्तुं कुशला न मवादृशः ।
द्वयं रूपान्वितं योग्यं लावण्यमपि मार्दवम् ॥ ६४ ॥
तद्व्रतेन गृहीतं किं त्वया हृदि पराक्रमम् ।
त्वयि तद्विरहाक्रान्तां त्वत्प्राप्त्याशाश्रयां पराम् ॥ ६५ ॥

पातयित्वाबलां लोके जायतेऽपयशस्तव ।
जातं त्वच्चिन्तया चित्तं शीतलं सर्वतो मम ॥ ६६ ॥
जाने न हि कथं श्वासा दाहिनश्चाश्रुबिन्दवः ।
अयि त्वद्विरही नैव शतच्छिद्रान्वितं मनः ॥ ६७ ॥
वद संदर्शयिष्यामि विदार्योद्य निजोदरम् ।
अयि नाथानुभूतं यत्तद्दुःखं तद्वियोगजम् ॥ ६८ ॥
न तदद्य मया शक्यं वक्तुं वर्षशतैरपि ।
किं तु तत्प्रीतये रम्यं वेश्मेदं विहितं मया ॥ ६९ ॥
ईदृक्चित्रान्वितं सम्यग्विलोकयितुमर्हसि ।
अभिधायेति वाक्यं तत्प्रेमनिर्भरमानसम् ॥ ७० ॥
समायाता निरोद्धुं तं बालैनैवाबलान्वितम् ।
सोऽपि तं हृदयं ज्ञात्वा निकामं कामपीडितम् ॥ ७१ ॥
तामनादृत्य वेगेन विनिर्यातो बहिः स्थितः ।
भयेनैवापयान्तं तमनुद्रुत्यावभामिनी ॥ ७२ ॥
पश्चाज्जग्राह रागेन(गेण) तूर्णं चीनांशुकाञ्चले ।
बालेनाकृष्यमाणं तद्वसनं तस्य चाशुभम् ॥ ७३ ॥
शिरोधरायाः प्राग्भागे व्यदरत्तनृपात्मजा ।
अपयातुं तथैवामुं जवेनैव नराधिपम् ॥ ७४ ॥
बहुशोऽतर्जयत्क्रुद्धा पश्चाद्भूपालनन्दिनी ।
याहि याहि कुतो मूढ गम्यते कर्म तावकम् ॥ ७५ ॥
कथयित्वा नृपाग्रे त्वां हनिष्याम्येवमप्रियम् ।
तर्जयन्निति साजिजपे(जीजपि)त्सपार्श्वमुपागमत् ॥ ७६ ॥
गलिताश्रुकणा मन्युलुलितालकसंततिः ।
सोऽपि तां दयितां वीक्ष्य तथारूपामुपागताम् ॥ ७७ ॥
विस्मयाविष्टहृदयः सान्त्वयन्निदमब्रवीत् ।
अयि सुन्दरि त्वद्वैरियोग्येयं दुर्दशा कथम् ॥ ७८ ॥

गृहीतैवं त्वयानन्तरोषाकुलमनीषया।
मद्व्यलीकेन केनापि खण्डितं चेन्मनस्तव ॥ ७९ ॥
तदेव वद सुश्रोणि प्रसन्नं क्रियते मया।
मन्युना वा परस्यापि कस्यचिद्वत भामिनि ॥ ८० ॥
विमनस्कासि तं हर्तुं शक्तोऽस्मि तव सांप्रतम्।
इत्थं निशम्य तद्वाक्यं प्रत्याहैनं नृपात्मजा ॥ ८१ ॥
क्रोधरक्तेक्षणामुञ्चत्कदुष्णोच्छ्वाससंततिम्।
त्वदीयेन व्यलीकेन न दूये पार्थिवोत्तम ॥ ८२ ॥
को वा कोपयितुं शक्तो मनो मे प्राकृतो जनः।
किं तु कर्म विधायैकं दूये मुग्धधिया स्वयम् ॥ ८३ ॥
अयोग्यमेव वक्तुं तच्छ्रुत्वा भूपाल क्षम्यताम्।
योऽयं दासो मया क्रीतो नरेन्द्र बहुभिर्धनैः ॥ ८४ ॥
किं त्वभीक्ष्णौतिकः(?) सोऽयं जातो मां प्रति पार्थिव।
जातास्मि चिन्तया यावद्भूपाल लेख्यपुत्रिका ॥ ८५ ॥
सोऽपि तावन्निरोद्धुं मां बलेन समुपागतः।
तमागतं समालोक्य भृशं कामगतं वशम् ॥ ८६ ॥
भयेनोद्भ्रान्तहृदया संजाताहं तदा नृप।
उपायो नेक्षितस्तस्मिन्विना युद्धं नखानखि ॥ ८७ ॥
विधाय तत्स्वधर्मोऽयं कथंचिद्रक्षितो मया।
इति राज्ञीवचः श्रुत्वा स भूपोऽमर्षपूरितः ॥ ८८ ॥
तूर्णमानीय तं दासं क्रुधा कारागृहे न्यधात्।
सह बन्दीकृतैस्तत्र बहुभिः कृतसंस्थितिः ॥ ८९ ॥
तदामन्यत तद्दुःखं न किंचिद्धर्मतत्परः।
किं तु तत्स्नेहपाशेन सैव भूपालनन्दिनी ॥ ९० ॥
वन्दिता चिन्तयोद्भूता कारावेश्मगताभवत्।
एवं निवसतस्तस्य तत्र कारागृहे पुनः ॥ ९१ ॥

व्यतीयुर्निर्विकारस्य दश वर्षाणि हेलया ।
आस्तामासववशाली यस्तत्रैव च पुरोगवः ॥ ९२ ॥
उभौ बन्दीकृतौ राजा पूर्वं क्रोधान्धचेतसा ।
एकोऽपश्यत्तयोः स्वप्ने स्वमात्मानं नृपान्तिके ॥ ९३ ॥
शीधुमात्रकरं सम्यग्रचितापानविभ्रमम् ।
तथा न भाजनं साधु व्यञ्जनं मस्तके धृतम् ॥ ९४ ॥
निपतद्भिर्द्वाक्षुवृन्देन भक्षितं दृष्टवान्परः ।
किमेतदिति संभ्रान्तहृदयौ तौ मुहुर्मुहुः ॥ ९५ ॥
पप्रच्छ तज्जनान्सर्वान्कारागृहगतानपि ।
कर्तुं तन्निश्चयं कश्चिन्नाभूच्छक्तस्तदापरः ॥ ९६ ॥
किं तु योसोभ(यूसुफ)नामासौ प्रोद्यार्थविचक्षणः ।
स्वप्ने येनैव भूभर्तुः पानलीला कृताधुना ॥ ९७ ॥
स्वप्नैरहोभिर्भगवच्छालीयत्तं समश्नुते ।
येनान्नं भक्षितं मूर्ध्नि वायसैः प्रेक्षितं परम् ॥ ९८ ॥
स याति पञ्चतां शीघ्रं शिलासारेण सांप्रतम् ।
यथैव स महाबुद्धिः कृतवानिलयं पुनः ॥ ९९ ॥
तथैवाद्य गतं ताभ्यां फलं स्वप्नसमुद्भवम् ।
एकोऽभून्मे(न्मि)स्रभूभर्तुः पानलीलासु दीक्षितः ॥ १०० ॥
एकदा मे(मि)स्रभूपालः स्वप्नेऽपश्यत्स्वयं महान् ।
स पुष्टं महिषीवृन्दं भक्षयन्तं परं कृशम् ॥ १०१ ॥
प्रबुद्धोऽथ समानीय सचिवान्स महीपतिः ।
किमेतदिति पृच्छन्तमूचुस्ते न हि किंचन ॥ १०२ ॥
अब्रवीत्सोऽथ भगवच्छाली यस्तत्र भूपतिम् ।
दत्त्वा जानुद्वयं भूमौ प्राञ्जलिर्नतकन्धरः ॥ १०३ ॥
योऽयं दासो महाबुद्धिर्जो(ज़ु)लेखाजेजमे(जीजमि)स्रयोः ।
कारागृहगतो राजन्सायं स्वप्नार्थपारगः ॥ १०४ ॥

पूर्वं मयापि भूपालबन्दीवेश्मनि वीक्षितः ।
स्वप्नस्तेन यदेवोक्तं तदासं फलमद्भुतम् ॥ १०५ ॥
इति श्रुत्वा स भूपालः समानीयाशुभं(तं) ततः ।
स्वप्नार्थं परिपप्रच्छ समुत्कण्ठितमानसः ॥ १०६ ॥
शृणुष्वा(चा)वहितो राजन्कथयामि समासतः ।
स्वप्नार्थं सुखदं लोके यथा बुद्धिस्तवाज्ञया ॥ १०७ ॥
अस्य(द्य)प्रभृति लोकेन्द्र सप्त वर्षाणि मेदिनी ।
मासाश्च तावतः सर्वमस्य पूर्णा भविष्यति ॥ १०८ ॥
पश्चाद्दुर्भिक्षपीडाजा बाद्य(ध)न्ते सकलं जगत् ।
कार्यं लोकहितार्थाय सर्वान्नग्रहणं विभो ॥ १०९ ॥
इत्याकर्ण्य धराधीशो ज्ञात्वा सत्यं परस्परम् ।
तमेव कल्पयामास सर्वान्नग्रहणे तदा ॥ ११० ॥
अथ भूपाज्ञया सोऽपि व्यवहारविचक्षणः ।
चकार सर्वतो ह्यन्नराशीन्पर्वतसंनिभान् ॥ १११ ॥
एवं निष्पादितं कार्यं यथा तेन विधेर्वशात् ।
भूपतिः सचिवश्चोभौ यातौ नामावशेषताम् ॥ ११२ ॥
ततः प्रकृतयः सर्वा अनाथास्तत्र कातराः ।
चक्रुस्तमेव योसोभ(यूसुफ)नामधेयं महीपतिम् ॥ ११३ ॥
अधिगम्याथ सद्भाग्यै राज्यं राजपराक्रमः ।
विधिवत्पालयामास प्रजा धर्मेण धर्मवित् ॥ ११४ ॥
नित्यं प्रमुदिता लोके आसंस्तस्मिन्हितेश्वरे ।
विना तद्विरहाक्रान्ततनुतां नृपकन्यकाम् ॥ ११५ ॥
यन्नते सस्य भात्येव याता बालमृगे ततः(?) ।
अहो तद्विप्रयोगान्धदृष्टिः सैवाभवत्तदा ॥ ११६ ॥

१. 'क्षजाः पीडा' इति भवेत्.

अवश्यंभाविनोऽर्थस्य कोऽन्यथाकर्तुमीश्वरः ।
प्राप्तो येन स तद्दुःखं तथा प्रीतोऽपि पार्थिवः ॥ ११७ ॥

इति यवनशास्त्रपारंगमपण्डितश्रीवरविरचिते कथाकौतुके त्रयोदशं कौतुकम् ।

---

चतुर्दशं कौतुकम् ।

एकदा शासतस्तस्य धरणीं तत्र सोदराः ।
मे(मि)स्रमर्थार्थिनः प्राप्ता भृशं दुर्भिक्षपीडिताः ॥ १ ॥
दृष्ट्वा तान्दूरतः सर्वान्परिज्ञाय च भूपतिः ।
पप्रच्छ विनयानम्रः के भवन्तोऽपि दुर्बलाः ॥ २ ॥
प्रत्यूचुस्ते महात्मानं वयं सर्वे सहोदराः ।
त्यक्त्वा स्वविषयं प्राप्तास्त्वत्सकाशं क्षुधातुराः ॥ ३ ॥
इत्याकर्ण्य महीपालः पुनः पप्रच्छ तत्र तान् ।
किंनामधेयो जनको भवतां विषयोऽपि वा ॥ ४ ॥
कनानघोषो याकोभ(याकूब)नामा ख्यातः पितास्ति नः ।
योसोभाग्य(यूसुफाख्य)सुतोत्पन्नदुःखान्ततनयोऽपि सन् ॥५
अथ वृत्तं पुरावृत्तं श्रुत्वा सर्वं महीपतिः ।
वस्त्रमेकं स्वकं दत्त्वा दानकार्ये महामनाः ॥ ६ ॥
प्रत्येकमन्नभारं च निधानं स्वर्णसंस्कृतम् ।
गुप्तं निधाय तन्मध्ये विससर्ज सु(स) तान्गृहान् ॥ ७ ॥
यथा यथा समीपत्वे प्राप्तास्ते नृपपूजिताः ।
तथा तथा पिताकस्मात्तेषामजनि हर्षितः ॥ ८ ॥
तस्याग्रतो विहायैवं सकलं वसनादिकम् ।
तच्छशंसुर्महात्मानं नृपधर्मपरायणम् ॥ ९ ॥
यावदनन्धि वसनं तत्पित्रा स्वयमद्भुतम् ।
आविर्बभूव ज्योतिस्तत्स्पर्शेनैवास्य चक्षुषोः ॥ १० ॥
प्राप्तालोकः स याकोभ(याकूब)नामधेयोऽतिशोभनः ।
पुनर्जातमिवात्मानममन्यत महीपतिः ॥ ११ ॥

संप्राप्तेऽथ प्रकाशोऽसौ विस्मयाविष्टमानसः।
समाहूयाब्रवीत्सर्वान्सुतान्बन्धूंश्च तत्क्षणम् ॥ १२ ॥
अहो किं विधिमायेयं क्षणान्नार्थप्रदर्शिनी।
किं वा भाग्योदयो मेऽद्य पश्यामि यदिदं पुनः ॥ १३ ॥
योसौभाग्य(यूसुफाख्य)सुतोत्पन्नविरहान्धीकृतं पुरा।
नेत्रद्वन्द्वममूत्किं वा वसनं तस्य सांप्रतम् ॥ १४ ॥
यत्ने कृतेऽपि नैर्मल्यमगाद्येनैव जातुचित्।
अङ्गुशस्पर्शमात्रेण तन्मेऽद्यैव प्रकाशितम् ॥ १५ ॥
इति तद्वचनं श्रुत्वा बान्धवास्तनयास्तथा।
स्तुवन्तो विधिवैचित्र्यं बभूवुर्हृष्टमानसाः ॥ १६ ॥
अथ याकोभ(याकूब)नामासौ सयाविद्धः सहात्मजैः।
स्वयं मे(मि)स्नाधिपं द्रष्टुमाजगाम महीमतिः ॥ १७ ॥
स मे(मि)सरं समासाद्य समासीनं च भूपतिम्।
दृष्ट्वा हृष्टमनास्तस्थौ बद्धाञ्जलिपुटः क्षणम् ॥ १८ ॥
ततः स भूपतिर्दृष्ट्वा जनकं स्वं चिरायुषम्।
भद्रासनात्समुत्थाय प्रणनाम मुहुर्मुहुः ॥ १९ ॥
दण्डवत्पतितं भूमौ सुखं सुखनिधिं पिता।
तदेतद्दर्शनानन्दगताशेषपरिश्रमः ॥ २० ॥
वृद्धोऽमन्यत लोके स्वं सद्भाग्योदयसंयुतम्।
अथ पितृनिदेशस्थो भ्रातृभिः परिवारितः ॥ २१ ॥
पालयामास विधिवत्प्रजा धर्मेण भूपतिः।
ततः सा राजतनया जो(जु)लेखानाम विश्रुता ॥ २२ ॥
तरुणी तद्वियोगान्धदृष्टिर्वृद्धत्वमागता।
समुपेत्य सभाद्वारं दुःखगद्गदया गिरा ॥ २३ ॥
बाष्पाम्बुपूर्णनयना व्याजहार मिताक्षरम्।
अहो भाग्यविहीनाहमेका जगति सांप्रतम् ॥ २४ ॥

इमामवस्थां संप्राप्तां न मामवति यन्नृपः।
त्वयि धर्मपरे राज्ञि प्रजानन्दकरे परम् ॥ २५ ॥
एका हि दुःखिता चेत्स्यामयशः कस्य सांप्रतम्।
तद्यशो रक्ष भूपाल लोकद्वयहितावहम् ॥ २६ ॥
दीनानाथपरित्राणं धर्म एव महीक्षिताम्।
इति तद्वचनं श्रुत्वा सद्यः सर्वे महीपतिम् ॥ २७ ॥
प्रोचुः प्राञ्जलयो राजन्वृणीष्वेमां सुमध्यमाम्।
निशम्य मन्त्रिवाक्यं तद्राजा स्मितमुखोऽवदत् ॥ २८ ॥
क्वेयं वृद्धान्धनयना क चाहं तरुणः सुदृक्।
सख्यं हि समयोः प्रोक्तं न हीनोत्तमयोः क्वचित् ॥ २९ ॥
विपरीतं तु यः कुर्यात्स यात्येवोपहास्यताम्।
इत्थं वदति भूपाले तावत्सापि सुमध्यमा ॥ ३० ॥
व्याजहार वियोगेन प्राप्तास्मीमां दशां तव।
प्रतीतिश्चेन्न ते राजन्स्त्रीणां चञ्चलचेतसाम् ॥ ३१ ॥
सत्यं तदपि मच्चित्तपरीक्षां कुरु सांप्रतम्।
यदि सादिसहस्रेषु गच्छत्सु पुरतो मम ॥ ३२ ॥
वृणीष्वेति भवद्वाहवल्गत्प्रेमान्वितं मनः।
इत्थं निशम्य भूपालः सर्वं चक्रे समाहितः ॥ ३३ ॥
अग्रहीत्सापि तद्वाजिवल्गामवनिपात्मजा।
पप्रच्छ तां नृपो बालां भूपते ज्ञातमे(?)त्कथम् ॥ ३४ ॥
संलग्ना हृदये राजंस्त्वद्वाजिक्रमसंततिः।
ज्ञात्वा प्रेमयुतं चित्तं वित्तं त्वद्विपयीकृतम् ॥ ३५ ॥
मानयन्मानिनीं राजा व्याजहार स्मिताननः।
वरं वरय वामोरु संतुष्टं मम मानसम् ॥ ३६ ॥
एतावदेव विवृतं रक्ष मां शरणागतम्।
बालोऽहं भवती वृद्धा न चेदेव वराङ्गने ॥ ३७ ॥

अधुनैव गृहीतुं त्वां पतनोत्कण्ठितं मनः ।
यद्येवं यौवनं याचे शंभुं भूपाल तेऽग्रतः ॥ ३८ ॥
स मे दास्यति तन्नूनमनाथगतिरीश्वरः ।
ओमित्याकर्ण्य तद्वाक्यं संतुष्टा नृपनन्दिनी ॥ ३९ ॥
अस्तौषीत्पश्यतां तेषां सत्यानां परमेश्वरम् ।
नमः शिवाय शुद्धाय प्रपन्नाभयदायिने ॥ ४० ॥
अप्रमेयानुभावाय पराय परमात्मने ।
नमो नाथगतित्राणकर्त्रे सद्भयहारिणे ॥ ४१ ॥
चन्द्रार्धमौलये देवदेवायोरगहारिणे ।
दिगम्बराय नेत्रोद्भूवह्निसूर्येन्दुवर्चसे ॥ ४२ ॥
संपदां प्रभवे भक्तभक्तशोकहराय च ।
नमोऽनन्तस्वरूपाय धर्माधर्मैकसाक्षिणे ॥ ४३ ॥
गतिमेवंविधां प्राप्तां प्रपन्नां पाहि मां प्रभो ।
इत्यभिष्टूय भूपालपुत्री पशुपतिं विभुम् ॥ ४४ ॥
तद्ध्यानानन्दसंपूर्णचित्तवृत्तिरभूत्क्षणम् ।
ततः प्रादुरभूद्वाणी गगनात्सिद्धिदायिनी ॥ ४५ ॥
उत्तिष्ठोत्तिष्ठ सुभ्रु त्वं प्रार्थय स्वेप्सितं वरम् ।
प्रसन्नो भगवाञ्छंभुर्देवदेवो जगत्पतिः ॥ ४६ ॥
यत्प्रार्थ्यतेऽधुना तूर्णं तद्ददाति महेश्वरः ।
इति श्रुत्वा वचो दिव्यं संतुष्टा पार्थिवात्मजा ॥ ४७ ॥
यौवनं प्रार्थयामास विषयासक्तधीः पुनः ।
दत्तं ते यौवनं सुभ्रु शंभुनानाथबन्धुना ॥ ४८ ॥
रमणेनाधुना सार्धं यथेष्टं सुखिता भव ।
किं तु शान्ते महाकल्पे समात्मानं महेश्वरः ॥ ४९ ॥
उपाविशति लोकानां कर्तुं कर्मविनिश्चयम् ।
तथाभूतानि सर्वाणि तरुणानि समन्ततः ॥ ५० ॥

संभवन्ति त्वमेवैका वृद्धा तेषु सुमध्यमे ।
सुखं दुःखमयं ज्ञात्वा पर्यन्ते संशयं परम् ॥ ५१ ॥
कर्तव्यमुचितं सुभ्रु कर्तव्यमधुना द्वयम् ।
एवमेतद्भवे तावद्यौवनं मे प्रदीयताम् ॥ ५२ ॥
न शक्यते पुनः सोढुं दुःसहां विरहव्यथाम् ।
एवं सा भूपतेः कन्या जराजीर्णापि तत्क्षणम् ॥ ५३ ॥
संजातापूर्वतारुण्यशालिनी प्रमदोत्तमा ।
तदद्भुतं विधेः कर्म शीलं धर्मं च सुभ्रुवः ॥ ५४ ॥
प्रशंसन्तो महात्मानः सर्वे प्रमुदिता जनाः ।
अथ भूमिपतिर्लब्धप्रतीतिर्हृष्टमानसः ॥ ५५ ॥
प्रगृह्य पाणिना पाणिं तस्या बालमृगीदृशः ।
सुरसद्मोपमं श्रीमत्कृतकौतुकमङ्गलम् ॥ ५६ ॥
गीतवादित्रसंजुष्टं प्राविशद्राजमण्डलम् ।
मेने कृतार्थमात्मानं सदा भूमिपतिस्तदा ॥ ५७ ॥
सापि तं रमणं श्रेष्ठं प्राप्य भूपालनन्दिनी ।
अमन्यतैकमात्मानं लोके जन्मभृतां वरम् ॥ ५८ ॥
नित्यनूतनप्रेमार्द्रहृदयौ दम्पती भृशम् ।
चक्रतुर्विविधाः क्रीडा नानोपवनभूमिषु ॥ ५९ ॥
यथा विरहजं दुःखं न कश्चिच्छक्तिमानभूत् ।
वक्तुं संयोगसंभूतं सुखं लोके तथा तयोः ॥ ६० ॥
वियोगं संनिकर्षं च द्वयं कर्तुं य ईश्वरः ।
तस्मै नवनवाश्चर्यनिधये विधये नमः ॥ ६१ ॥

इति यवनशास्त्रपारंगमपण्डितश्रीध(व)रविरचिते कथाकौतुके चतुर्दशं कौतुकम् ।

---

पञ्चदशं कौतुकम् ।

अभिधाय कथामेतां शृङ्गाररसाङ्किताम् ।
अधुना वक्ष्यते शान्तो लोकद्वयहितावहः ॥ १ ॥

6682

असारे जीवलोकेऽस्मिन्कोऽयं मानसबालवत् ।
विहर्तुं साभिलाषोऽसि सर्वमेतद्वृथा त्विदम् ॥ २ ॥
अयं मानसहंसत्वं हित्वा वाञ्छसि सद्गतिम् ।
कथं दुर्जनधूकौघात्किं वा बुद्ध्या समुज्झितः ॥ ३ ॥
किं वा सेवे नृपं याचे धनिनं वा निराश्रयः ।
इति चिन्ताकुलो मूढ नयस्येव वृथा वयः ॥ ४ ॥
तस्मादुत्तिष्ठ शरणं समुपैहि महेश्वरम् ।
यदुपासनया सौख्यं किमन्यैश्चित्तविभ्रमैः ॥ ५ ॥
यत्सेवया विना लोके को वा सिद्धिमुपागतः ।
ननु तत्स्मरणं जन्मसफलं साधुषु स्मृतम् ॥ ६ ॥
यन्नामस्मरणादेव क्षीयते कर्मवासना ।
विभुमेवंविधं हित्वा कस्ते शरणदोऽपरः ॥ ७ ॥
दीनानाथैकशरणं वरण्यं सिद्धिदायकम् ।
देवदेवं जगन्नाथं शरणं समुपैहि तम् ॥ ८ ॥
निजशक्तिप्रभावेण सृष्ट्वेदं निखिलं जगत् ।
अनुप्रविष्टस्तत्रासौ कुर्वल्लीला विभाति यः ॥ ९ ॥
नमस्तस्मै भगवते पराय परमात्मने ।
अचिन्त्यगतये सर्गस्थितिप्रलयहेतवे ॥ १० ॥
योगिनो यं विचिन्वन्तो विमलेन समाधिना ।
सृष्ट्वा भवभयां भीतिं न पश्यन्ति कदाचन ॥ ११ ॥
तन्मनो यन्महेशानध्यानलीनं मनस्विनाम् ।
वचनं शिवनामैकरसं नरस्य शुचि ॥ १२ ॥
न तीक्ष्णानि तपो नैव क्रिया ते तं पवित्रताम् ।
शुद्धेन मनसोद्गीतं शिवनाम यथा वपुः ॥ १३ ॥
अशान्ताय प्रशान्ताय त्रिगुणाय गुणात्मने ।
नमो भवाय शर्वाय श्रीकण्ठाय मृडाय च ॥ १४ ॥

मानुषं दुर्लभं प्राप्य सर्वाशापरकोद्भुतम्।
धन्या भजन्ति दुःखौघहरं शरणदं हरम्॥ १५॥
तुमुले मानसेऽस्माकं वाणी चन्द्रकरोज्ज्वला।
यद्विश्रम्यति रम्येत सौभाग्यं गिरिजापतेः॥ १६॥
यदा शंभोर्निवेष्वेव धृतो वाग्विभवो मया।
शुष्कशुष्कोपमं मन्ये शक्रासनपरिग्रहम्॥ १७॥
रोमाञ्चितवपुर्नेत्रे बाष्पमूले च गद्गदा।
वाणी शिवशिवेत्येवं भवभक्तिजुषां नृणाम्॥ १८॥
भव रुद्रोग्र शर्वेश शिवेशानेति भक्तितः।
गद्गदं गदतो हर्षान्मा गा भूमण्डलं वृथा॥ १९॥
कालकिंकरहस्तस्थपाशोन्नद्धं भयातुरम्।
को मां मोचयितुं शक्तो विना त्वद्धुंकृतिं प्रभो॥ २०॥
अन्तरेण नृणां सम्यग्भवदङ्घ्रिनिषेवणात्।
बिन्दुं विनैव पद्मस्थजलबिन्दुचलाः श्रियः॥ २१॥
शरणं त्वां समाश्रित्य महेशं करुणानिधिम्।
अनीशश्चेदहं दोषः स मे प्राक्कर्मसंभवः॥ २२॥
मूकमूढविपद्धारमन्धमन्धकनाशकृत्।
भवाब्धिमग्नं राज्यन्धहर तार प्रतारय॥ २३॥
पर्यटन्संविशन्कर्म कुर्वञ्छिवपरायणः।
यत्सुखं समवाप्नोति न तच्छक्रासनस्थितः॥ २४॥
अनागतमनाथं न कथं नेक्षसि मां प्रभो।
त्वां विना कोऽपरो लोके गतिः कोद्धरणीक्षमः॥ २५॥
पदं नात्र करोषीश हृदि पापरतस्य मे।
वद पूर्णकृपाम्भोधिः(धे) कतमा स्याद्गतिः पुनः॥ २६॥
त्वत्परः को जगन्नाथ कर्णधारो भवाम्बुधौ।
तारयत्युडुपं मूर्ध्ना धारयन्योऽखिलं जगत्॥ २७॥

कृतं कर्माशुभं प्राक्चेत्कथं शिवपरा मतिः ।
विमलं चेत्कथं नाथ शोकमोहादिकं त्विदम् ॥ २८ ॥
मनुष्यभावमाश्रित्य त्वां च निस्तारकं प्रभुम् ।
सोऽहं वसामि चेद्देव वद कस्य विडम्बना ॥ २९ ॥
याचे त्वामेव वरदं वरमेकं महेश्वर ।
भूयान्मम भवद्भक्तिर्लोकद्वयहितावहा ॥ ३० ॥
पिता बन्धुः सुहृत्स्वामी शरण्यः सर्वदेहिनाम् ।
अनन्यशरणं नाथ रक्ष मां परमेश्वर ॥ ३१ ॥

इति यवनभाषापारंगमपण्डितश्रीध(व)रविरचिते कथाकौतुके पञ्चदश कौतुकम् ।

---

१. यवनलिपिलिखितपुस्तका[illegible]पुस्तकदर्शनेन कथाया अ-शतमिदम् [illegible] प्रयोऽपूर्णो भवेत्, मन्ये [illegible] भवेत्